

# नित्यकर्मविधिः ।

लौगाक्षिमुनिप्रक्रमः काश्मीरीय त्रैवर्णेयः

श्रीमद्भिः पं० डाक्टर बालकृष्ण कौलैः

सहायितेन

नोनरग्रामपाठशालाध्यक्षेण

## पंडित केशवभट्टेन

संस्कृतः शोधितश्च ।

मुम्बय्यां

निर्णयसागराख्यमुद्रणयन्त्रालयेऽङ्कयित्वा प्राकाश्यं नीतः ।

संवत् १९७४. इ. स. १९१७.

परोपकाराय प्रकाशितः ।



# उपोद्घातः ।

इह खलु 'आरुरुक्षोर्मुनेर्योगं, कर्म कारणमुच्यते', इति। 'कषाये कर्मभिः पक्के, ततो ज्ञानं प्रजायते' इति । 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इत्यादिशासनात् । चित्तशुद्ध्यर्थं कर्मणामाऽऽवश्यकत्वात् । तत्र 'सायं प्रातः सन्ध्यामुपासीत' इति । 'यावज्जीवमऽग्निहोत्रं जुहुयात्' इति । 'कुर्वन्नेवेह कर्माणि, जिजीविषेत् शतं समाः' इत्यादेः । सन्ध्यावन्दनादीनां नित्यकर्मतामऽवगत्य । तत्त्यागस्य 'नाऽयं लोकोऽस्त्यऽयज्ञस्य कुतोऽन्यः कुरुसत्तम' इति । 'नित्यान्यऽकरणे प्रत्यवायसाधनानि सन्ध्यावन्दनादीनि' इति । 'नाऽनुतिष्ठति यः पूर्वां, नोपास्ते यश्च पश्चिमाम्, । स शूद्रवद्बहिष्कार्यः, सर्वस्माद्विजकर्मणः' इति श्रुतिस्मृतितो विघ्नबाहुल्यमऽपांक्तेयतां च विज्ञाय । तत्कृतौ 'स्ववर्णाऽश्रमधर्मेण, सादितेश्वरचोदनात्' इति । 'असक्तोह्याचरन् कर्म, परमाऽऽप्नोति पूरुषः' इति । 'सन्ध्यामुपासते ये तु, सततं संशितव्रताः। विधूतपापास्ते यान्ति, ब्रह्मलोकं सनातनम्' इति। 'कर्मणा पितृलोको, विद्यया देवलोकः' इत्यादेः । निःशेषाऽघनिष्कृतिद्वारेश्वराऽनुग्रहात् परमपुरुषार्थप्राप्तिं चाऽवधार्य । मया त्रैवर्ण्यहितायेमं 'नित्यकर्मविधिपुस्तकं' यथामति संक्षिप्य मुद्रापणे प्रयत्यते ।

अत्र च निजधर्मानुसारिणः सज्जनाः पापपुञ्जतूलाग्नेरऽस्य कर्मणः प्रीतितोऽनुष्ठानैरुभयलोकाऽभिमताप्तिद्वारा मदीयं श्रमं विश्रमयन्तु । इति विज्ञापयति ।

कश्मीरदेशवास्तव्यो ज्योतिर्विद्वर-श्रीमत्-सद्रामभट्टतनयस्य ज्योतिर्विद्वर-श्रीप्रसादभट्टस्य तनयो ज्योतिर्वित्-पण्डित केशवभट्टः-विशारदः ॥

# वर्णमाला ।

अ आ इ ई । उ ऊ ऋ ॠ । ऌ ॡ ए ऐ । ओ औ अं अः ॥ स्वराः ।

क् ख् ग् घ् ङ् । च् छ् ज् झ् ञ् । ट् ठ् ड् ढ् ण् । त् थ् द् ध् न् ।

प् फ् ब् भ् म् । य् र् ल् व् । श् ष् स् ह् । क्ष त्र ज्ञ । इतिव्यञ्जनानि ।

| | | | | |
|---|---|---|---|---|
| क् + अ = क | क् + ख = क्ख | त् + थ = त्थ | म + र = म्र | ल + क्ष = ल्क्ष |
| क् + आ = का | क् + र = क्र | त् + न = त्न | म + ह = म्ह | व् + र = व्र |
| क् + इ = कि | क् + त = क्त | थ् + व = थ्व | द् + द = द्द | व् + य = व्य |
| क् + ई = की | क् + ष = क्ष | न् + न = न्न | द् + ध = द्ध | श् + श = श्श |
| क् + उ = कु | ख् + य = ख्य | न् + य = न्य | द् + य = द्य | श् + य = श्य |
| क् + ऊ = कू | ग् + ग = ग्ग | न् + र = न्र | द् + र = द्र | श् + र = श्र |
| क् + ऋ = कृ | च् + छ = च्छ | प् + प = प्प | य् + य = य्य | श् + व = श्व |
| क् + ए = के | ज् + ञ = ज्ञ | प् + य = प्य | य् + व = य्व | ष् + प = ष्प |
| क् + ऐ = कै | ज् + व = ज्व | ब् + य = ब्य | र् + क = र्क | स् + त = स्त |
| क् + ओ = को | ट् + ट = ट्ट | ब् + र = ब्र | र् + श = र्श | स् + स = स्स |
| क् + औ = कौ | ड् + ढ = ड्ढ | ब् + ज = ब्ज | र् + स = र्स | ह + ऋ = हृ |
| क् + अं = कं | ण् + ण = ण्ण | म् + म = म्म | ल् + क = ल्क | ह + म = ह्म |
| क् + अः = कः | त् + त = त्त | म् + य = म्य | ल् + य = ल्य | ह + य = ह्य |

## शिक्षा ॥

### ॐ अथ संक्षेपतस्त्रैवर्ण्यानामाऽऽह्निकं कर्म लिख्यते ॥

ब्राह्मे मुहूर्ते शयनतलादुत्थाय, यथासम्भवं शुद्धिं विधायाऽऽसने चोपविश्य सहस्रारे यथामूर्ति शशिवर्णं स्वं गुरुं ध्यात्वा स्तुत्वा च, तदुक्तरीत्या स्वेष्टदेवीं ध्यात्वा स्तुत्वा च ब्राह्मं तेजो विधायिनीं गायत्रीं च ध्यात्वा, स्तुत्वा। ततं उत्थाय बहिराऽऽह्निकं—

उपनीय गुरुः शिष्यं, शिक्षयेत् शौचमाऽऽदितः ।
आचारमऽग्निकार्यं च, सन्ध्योपासनमेव च ॥ १ ॥
प्रतिश्रयाद्दक्षिणपश्चिमेन, क्षिप्रं गत्वा क्षेपमात्रं शरस्य ।
कृत्वा पुरीषं च शिरोऽवगुण्ठ्य, न तु स्पृशेज्जातु शिरः करेण ॥ २ ॥
शुष्कैश्च तृणकाष्ठाद्यै,रऽन्तर्धाय वसुन्धराम् ।
दिवासन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ॥ ३ ॥
कुर्यान्मूत्रपुरीषे च, रात्रौ चेद्दक्षिणामुखः, यथेच्छं भयध्वान्तयोः ॥ ४ ॥
एकां लिङ्गे मृदं दद्या, द्वामहस्ते तु मृत्त्रयम् ।
उभयोर्हस्तयोर्द्वे तु, मूत्रशौचं प्रचक्षते ॥ ५ ॥
एका लिङ्गे गुदे तिस्र,स्तथा वामकरे दश ।
उभयोः सप्त दातव्या, मृदः शुद्धिमऽभीप्सता ॥ ६ ॥
विप्रे गौरमृदः शौचे, क्षत्रे रक्तास्तथैव च ।
हरिद्रवर्णा वैश्ये तु, कृष्णा स्त्रीशूद्रयोः स्मृताः ॥ ७ ॥
नाऽहरेन्मृत्तिकां वप्रा,-न्न कूलात्सैकतात्तथा ।
नाऽखुकृष्टान्नवल्मीका,-त्पांसुलान्न च कर्दमात् ॥ ८ ॥
न मार्गादूषराच्चैव, शौचशिष्टां परस्य तु ।
एतच्छौचं गृहस्थानां, द्विगुणं ब्रह्मचारिणाम् ॥ ९ ॥
त्रिगुणं तु वनस्थानां, यतीनां तु चतुर्गुणम् ।
कृत्वा मूत्रपुरीषे च, खान्याऽऽचान्त उपस्पृशेत् ॥ १० ॥
दिवा शौचस्य रात्र्यर्धं, पथि पादो विधीयते ।
आर्तः कुर्याद्यथाशक्ति स्वस्थः कुर्याद्यथोदितम् ॥ ११ ॥ इति शौचशिक्षा ।

ॐउपनयनप्रभृति ब्रह्मचारी स्याः, मार्गवासाः स्याः, संहतकेशः स्याः, भैक्षाचर्यवृत्तिः स्याः, सशल्क[illegible], [illegible]मुञ्जी मेखलां धारयेः, न मधुमांसे [illegible]गवर्जी स्याः, आचार्यस्याऽप्रतिकूलः स्याः, सर्वकार्याऽस्वतन्त्रः स्याः, पूर्वोत्थायी स्याः, जघन्यसंवेशी स्याः, यत्त्वामुपेयात्, तदऽस्मै दद्याः, बहूनां येन संयुक्तस्तदऽस्मै दद्याः, न प्रविभजेः, नाऽस्य शय्यामाऽऽविशेः, न रथमाऽऽरुहेः, न संवस्त्रयेथाः, सर्वाणि संस्पृशिकानि स्त्रीभिः सह वर्जयेः, न मुषितां प्रेक्षेः, न विहारार्थं जल्पेः, न रुच्यर्थं किंचन धारयेथाः, न स्नायाः, उदकं वाऽभ्युपेयाः, यदि स्नायाः, दण्ड इवाप्सु परिप्लवेथाः, मुण्डो भव, जटिलो भव, एकशिखी वा भव, सायं प्रातः सन्ध्यामुपासीथाः, तिष्ठेः पूर्वां, आसीन उत्तरां, 'ॐभूर्भुवः स्वरित्युक्त्वा' तत्सवितुरिति सावित्रीमनुब्रूयाः, प्रागऽस्तमयान्निष्क्रम्य समिध आहरेः, सायं प्रातः सन्ध्यानिःसरणं कर्तव्यम्। भैक्षाचरणं कर्तव्यं, अग्नीन्धनं कर्तव्यं, सायमेवाऽग्निमिन्धीथा इत्येके,। इति व्रतशिक्षा॥

ॐ मा मलवद्वाससोऽद्राक्षीः, मा सम्भाषयेथाः, मलवद्वाससो भवन्ति, उदक्यासूतिकाश्वपाकाऽशुचयोऽन्तेवासिन इति, न श्मशानं गच्छेः, न शवशरीरं पश्येः, अनातृणं शवशरीरं दृष्ट्वा, त्रिरात्रमुपवासेः, न मधुमांसे प्राश्याऽऽलभ्य वा शरीरं पुनर्व्रतमाऽऽलभेथाः, यानि हविर्दूषणानि तानि भोजनदूषणानि, नोच्छिष्टं भुञ्जीथाः, नोच्छिष्टमऽन्यस्मै दद्याः, "मा गुरोर्भुञ्जीथाः" व्याधितविषयमेतत्, येनेच्छेत् तेन चिकित्सेत्, कामं गुरूच्छिष्टं भुञ्जीयादिति ह्याऽऽचार्याः,। न नक्तं भुञ्जीथाः, उपज्वल्य वा भुञ्जीथाः, न मृन्मये भुञ्जीथाः, न प्रतिसन्दध्याः; इत्येके, स्थानाऽऽसनं पर्वान्तेषूपवासः वाग्यमनं च। कंचिदऽप्रयतं दृष्ट्वा प्राणायामैः स शुद्ध्यति सन्दर्शने त्रयः कार्याः, संव्याहृत्य तु सप्त, समासाद्य तु द्वादश, सर्वत्र ज्योतिर्दर्शन, मुदकोपस्पर्शनम्, सूर्याचन्द्रमसौ [illegible]ह्मणा, इत्येतानि पञ्च ज्योतींषि, एतेषामेकेनाऽपि शुद्ध्यति, अबद्धं मनो [illegible]दं [illegible] ज्योतिषां श्रेष्ठो, दीक्षी मामाहिंसीरिति सूर्यं दिवा, अग्निं रात्रौ, रेतसि स्कन्ने, पुनर्मामैत्विन्द्रियमिति जपेत्॥ इति॥

ॐ वैणवदण्डधारी स्याः, नित्यं छत्रधारी स्याः, अदत्तहरणं प्रतिषिद्धम्। अपरया द्वारा निःसरणं प्रतिषिद्धं, मलवद्वाससा सह संभाषा प्रतिषिद्धा, रजोवाससा सह शय्या प्र०, गुरोर्दुरुक्तवचनं प्र०, अस्थाने शयनं प्र०, सरणं प्र०, गायनं प्र०,

नर्तनं प्र०, तस्य चेक्षणं प्रतिषिद्धम्। सत्यं वद, धर्मं चर, स्वाध्यायात् मा प्रमद, आचार्याय प्रियं धनमाऽऽहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः, सत्यान्न प्रमदितव्यम्, धर्मान्न प्र०, यत्नान्न प्र०, कुशलान्न प्र०, स्वाध्यायप्रवचनाभ्यां न प्र०, यज्ञात् देवपितृकार्येभ्यो न प्र०,। मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव,। अतिथिदेवो भव,। यानि अनवद्यानि कर्माणि, तानि त्वया कर्तव्यानि, नो इतराणि,। अथ यानि अस्माकं सुचरितानि, तानि त्व०, अथ ये के चाऽस्मच्छ्रेयांसो ब्राह्मणा आगच्छेरन्, तेषां त्वयाऽऽसने न प्रश्रयितव्यम्, श्रद्धया देयमऽश्रद्धया देयं, संविदा देयमऽसंविदा देयं, ह्रिया देयं भिया देयं, वित्यै देयमऽवित्यै देयं, भूत्यै देयमऽभूत्यै देयम्। अथ यदि ते कर्मविचिकित्सा, वृत्तिविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः समदर्शिनो युक्ता अयुक्ता, रूक्षा अरूक्षा, लुब्धा अलुब्धा वा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन्, तथा त्वं तेषु वर्तेथाः, एष आदेशः, एष आदेशः। एषा वेदोपनिषत्, एषा वेदोपनिषत्। एतदऽनुशासनं, एतदऽनुशासम्। एतदुपास्यम्।

इति आचारशिक्षा। इत्युक्तदिशाऽऽचरेत्॥

श्रीकृष्णार्पणमऽस्तु॥





# नित्यकर्मविधिः ।

## अथ स्नानविधिः ।

श्रीगणेशाय नमः

आयुर्बलं यशो वर्चः, प्रजाः पशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च, त्वं नो देहि वनस्पते ॥ इति दन्तधावनमंत्रः.

नमोऽस्त्वऽनन्ताय सहस्रमूर्तये, सहस्रपादाऽक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते, सहस्रकोटीयुगधारिणे नमः ॥ इति वामपादप्रक्षा०

नमः कमलनाभाय, नमस्ते जलशायिने ।
नमस्ते केशवाऽनन्त, वासुदेव नमोऽस्तु ते ॥ इति दक्षिणपादप्रक्षालनम्.

गंगाप्रयागगयनैमिषपुष्करादितीर्थानि यानि भुवि सन्ति हरिप्रसादात् ।
आयान्तु तानि करपद्मपुटे मदीये, प्रक्षालयन्तु वदनस्य निशाकलंङ्कम् ॥

तीर्थे स्नेयं तीर्थमेव, समानानां भवति मानः ।
शंस्यो अररुषो धूर्तिः प्राणङ्, मर्त्यस्य रक्षाणो ब्रह्मणस्पते ॥ इति मुखप्रक्षालनम्.

ॐ गायत्र्यै नमः । ॐ भूर्भुवःस्वस्तत्सवितुर्वरेण्यं, भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् ३ ॥ इति यज्ञसूत्रप्र० । गायत्र्यैव शिखामाबद्ध्य.

यज्ञोपवीतं परमं पवित्रं, प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं, यज्ञोपवीतं बलमस्तु तेजः ॥
यज्ञोपवीतमऽसि, यज्ञस्य त्वा, उपवीतेन, उपनह्यामि । इति यज्ञसूत्रधारणम्.

कृत्वाऽलं पादशौचं, विमलमऽथ जलं, त्रिः पिबेदुन्मृजेद्वि-
स्तर्जन्यऽङ्गुष्ठकाभ्यां सजलमऽभिमृशेन्नासिकारन्ध्रयुग्मम् ।
अङ्गुष्ठाऽनामिकाभ्यां नयनयुगलकं, कर्णयुग्मं कनिष्ठा-
ऽङ्गुष्ठाभ्यां नाभिदेशं, हृदयमऽथ तलेनाऽङ्गुलीभिः शिरोंसौ ॥

ततः प्राणायामः । ॐ ब्रह्मणोऽग्न्यादयः । नमो अग्नये, अप्सुषदे, नम इन्द्राय, नमो वरुणाय, नमो वारुण्यै, नमोऽपांपतये, नमोऽद्भ्यः ॥ इति नमस्कारः.

अवभृथे त्रिष्टुप् वरुणः ॥

उरुं हि राजा वरुणश्चकार, सूर्याय पन्थामऽन्वेत वा उ ।
अपदे पादा प्रतिधातवेऽक, रुताऽपवक्ता हृदयाविधश्चित् ॥ इति उपस्थानम्.

यमस्य राज्ञो जगती वरुणः ॥

ये ते शतं वरुण, ये सहस्रं, यज्ञियाः पाशा, वितता महान्तः ।
तेभिर्नो देवः सविता बृहस्पतिर्विश्वे देवा मरुतो मुंचन्तु स्वर्काः ॥
इति जलं त्रिरावर्तयेत्.

निचाङ्कुणस्य शुनः शेपस्य चाऽपः, सुमित्रियान आपः ओषधयो भवन्तु ।
दुर्मित्रियास्तस्मै सन्तु, योऽस्मान्द्वेष्टि यंच वयं द्विष्मः ॥
इति वामभागे जलाञ्जलित्रयं क्षिपेत् ॥

यत्किञ्चेदं वरुण, दैवे जनेऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्ते यत्तव धर्माय योऽपि, समानस्तस्मादेनसो देव रीरिषः ॥ इति नमस्येत्.
ततो मृदो भागत्रयं कृत्वा प्रथमभागे जलसेचनम् । ॐ भूर्भुवःस्वः ३ ॥
द्वितीयभागे जलसेचनम् ॥ त्रितस्य महापंक्तिराऽऽदित्याः ।
आदित्या अव हि ख्याता, दिकूलाद्दिवस्पृशः सुतीर्थाः सर्वतो यथा ।
नुन्नोनेषया सुगमऽनेहसो, व ऊतयः, सु ऊतयो व ऊतयः ॥
तृतीयभागे जलसेचनम् । मेधातिथेर्गायत्रं विष्णुः ॥
अतो देवा अवन्तु नो, यतो विष्णुर्विचक्रमे, पृथिव्याः सप्त धामभिः ।
ततस्तृतीयांशस्य भागचतुष्कं, विधाय चतुर्दिक्षु क्षिपेत् ॥
भर्गस्य बृहती इन्द्रः, यत इन्द्र भयामहे, ततो नो अभयंकृधि ।
मघवञ्छग्धि तव तन्न ऊतभिर्विद्विषो विमृधो जहि । इति पूर्वे ॥
शासस्याऽनुष्टुभौ विमृध इन्द्रः ॥ स्वस्तिदाविशस्पतिर्वृत्रहा विमृधोवशी ।
वृषेन्द्रः पुर एतु नः, सोमपा अभयंकरः ॥ इति दक्षिणे.
विरक्षो विमृधो जहि, विवृत्रस्य हनूरुज ।
विमन्युमिन्द्र वृत्रहन्नऽमित्रस्या भिदा सतः ॥ इति पश्चिमे.
"वसुक्रस्य त्रिष्टुबिन्द्रः" । इदं सु मे जरितरः, चिकिद्धि प्रतीपं शापं ।
नद्यो वहन्ति, लोपाशाः सिंहं, प्रत्यंच मत्स्याः, क्रोष्टा वराहा, न्निरतत्थ-
कक्ष्यात् ॥ इति उत्तरे.

यज्ञस्याऽनुष्टुप् मृत्तिका ॥

अश्वक्रान्ते रथक्रान्ते, विष्णुक्रान्ते वसुन्धरे ।
उद्धृतासि वराहेण, कृष्णेन शतबाहुना ॥
मृत्तिके त्वां च गृह्णामि, प्रजया च धनेन च ।
मृत्तिके ब्रह्मदत्ताऽसि, कश्यपेनाऽभिमन्त्रिता ॥
मृत्तिके हर मे पापं, यन्मया दुष्कृतं कृतम् ।
वाचा कृतं कर्मकृतं, मनसा यत्तु चिन्तितम् ॥
मृत्तिके देहि मे पुष्टिं, त्वयि सर्वं प्रतिष्ठितम् ।
त्वया हृतेन पापेन, ब्रह्मलोकं व्रजाम्यऽहम् ॥

इति अभिमंत्रितया द्वितीयमृदा जलालोडितया नाभेरूर्ध्वं विशोधयेत् ॥

ततः प्रथमांशस्य भागचतुष्कं विधाय कुत्सस्य रुद्रो जगती ॥

मानस्तोके तनये, मान आयौ मा नो गोषु, मा नो अश्वेषु रीरिषः ।
वीरान्मा नो रुद्र भामितो, वधीर्हविष्मन्तो नमसा विधेम ते ॥

इति ललाटमाद्यांश मृदाऽनुलिप्य.

ॐभूः ॐभुवः ॐस्वः इति वामांसे, ॐमहः ॐजनः ॐतपः इति दक्षिणांसे, ॐसत्यमिति हृदये द्वितीयांशेनाऽनुलिप्य । ततो नमस्कारः ॥

तीर्थस्याऽऽवाहनं कुर्या,-त्तत्प्रवक्ष्याम्यऽनन्तरम् ।
कुरुक्षेत्रं गया गंगा, प्रभासं पुष्कराणि च ॥
तीर्थान्येतानि सर्वाणि, स्नानकाले भवन्तु मे ।
प्रपद्ये वरुणं देवमऽम्भसां पतिमूर्जितम् ॥
याचितं देहि मे तीर्थं, सर्वपापाऽपनुत्तये ।
रुद्रान्प्रपद्ये वरदान्सर्वानऽप्सुषदस्त्वऽहम् ॥
सर्वानऽप्सुषदश्चैव, प्रपद्ये प्रणतः स्थितः ।
देवमऽप्सुषदं वह्निं, प्रपद्येऽघनिषूदनम् ॥
आपः पुण्याः पवित्राश्च, प्रपद्ये शरणं तथा ।
रुद्रश्चाऽग्निश्च सर्पाश्च, वरुणस्त्वाऽप एव च ॥

शमयन्त्वाऽऽशु मे पापं, पुनन्त्वेते सदा मम ।
इत्येवमुक्त्वा कर्तव्यं, ततः संमार्जनं जले ॥

अथ जलांजलिं तृतीयांशमृत्सहितं गृहीत्वा ॥

अपांपतये विद्महे, पाशपाणये धीमहि, तन्नो वरुणः प्रचोदयात् ३ । ॐतत्सत् ब्रह्म अद्य तावत्तिथावऽद्य, अमुकमासस्य अमुकपक्षस्य, तिथावऽमुकायां, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं, श्रीनारायणप्रीत्यऽर्थं अमुकनद्याः प्रवाहे, स्नानमहं करिष्ये ॐकुरुष्व ॥ इति प्रवाहान्तःक्षिप्त्वा ॥ शिरसि जलमऽञ्जलिना प्रक्षिपेत् ॥

ॐ तद्विष्णोः परमं पदं, सदा पश्यन्ति सूरयः, दिवीव चक्षुराऽऽततम् ।
तद्विप्रासो विपन्यवो, जागृवांसः समिन्धते, विष्णोर्यत्परमं पदम् ॥

ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्य मिति मार्जयेच्छिरः ॥

ॐहंसः शुचिषद्वसुरऽन्तरिक्षस,द्धोता वेदिषदऽ,तिथिर्दुरोणसत् ।
नृषद्वरस,दृतसद्व्योमसद,ब्जा गोजा, ऋतजा अद्रिजा ऋतम् ॥ इति उपस्थानम्.

ॐनमो देवभ्यः कण्ठोपवीती स्वाहा ऋषिभ्यः । अपसव्येन स्वधा पितृभ्यः सव्येन आब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराचरं जगत्तृप्यतु तृप्यतु तृप्यतु एवमऽस्तु ॥

यत्त्वगऽस्थिगतं पापं, जन्मान्तरकृतं च यत् ।
तन्मे हरस्व कल्याणि, मूर्ध्नि स्पर्शेन वैष्णवि ॥ इति परिशिष्टमृदा तिलकं कार्यम्.

अथ वस्त्रधारणम् ॥

युवा सुवासाः परिवीत आगात्स उच्छ्रेयान्भवति जायमानः ।
तन्धीरासः कवय उन्नयंति, साध्यो मनसा देवयन्तः ॥
अस्मत्कुले तु ये जाता, अपुत्रा गोत्रवर्जिताः ।
ते पिबन्तु मया दत्तं, वस्त्रनिष्पीडनोदकम् ॥ इति स्नानपट्टपीडनम्.

इति स्नानविधिः ॥

---

## अथ सन्ध्योपासना ॥

श्रीमहागायत्र्यै नमः । सावित्र्यै नमः । सरस्वत्यै नमः ॥

ॐप्रणवस्य ऋषिर्ब्रह्मा, गायत्रं छन्द एव च ।
देवोऽग्निर्व्याहृतिषु च, विनियोगः प्रकीर्तितः ॥

प्रजापतेर्व्याहृतयः, पूर्वस्य परमेष्ठिनः ।
व्यस्ताश्चैव समस्ताश्च, ब्राह्ममऽक्षरमोमिति ॥
व्याहृतीनां समस्तानां, दैवतं तु प्रजापतिः ।
व्यस्तानामऽयमऽग्निश्च, वायुः सूर्यश्च देवताः ॥
छन्दश्च व्याहृतीनामे,काऽक्षराणामुक्ताख्यं, व्यक्षराणामऽत्युक्ताख्यम् ।
विश्वामित्र ऋषिश्छन्दो, गायत्रं सविता तथा ॥
देवतोपनये जप्ये, गायत्र्या योग उच्यते ।
आवाहयामि गायत्रीं, सर्वपापप्रणाशिनीम् ॥
न गायत्र्या परं जप्यं, न व्याहृतिसमं हुतम् ।
आगच्छ वरदे देवि, जप्ये मे सन्निधौ भव ॥
गायन्तं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता ।
एवमाऽऽर्षं छन्दो दैवतं, विनियोगं चाऽनुस्मृत्य ॥
गायत्र्या शिखांमाऽबध्य, गायत्र्यैव समन्ततः ।
आत्मनश्चापः परिक्षिप्य, प्राणायामं कुर्यात् ॥ इति नमस्कृत्य.

अथाऽञ्जलिंकृत्वा ॥

ओजोऽसीति गायत्रीमाऽऽवाह्य । देवानामाऽऽर्षम् ॥
ओजोऽसि सहोऽसि, बलमऽसि भ्राजोऽसि देवानांधाम नामासि ।
विश्वमऽसि विश्वायुः सर्वमऽसि सर्वायुरऽभिभूः ॥ अथ प्राणायाममंत्रः.
ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं—
ॐतत्सवितुर्वरेण्यं, भर्गो देवस्य धीमहि, धियो योनः प्रचोदयात्-
ॐआपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ॥ इति पठन् पूरककुम्भकरेचकेषु नाभिहृदयललाटेषु रक्तनीलश्वेतान् ब्रह्मविष्णुशिवान् ध्यायन् प्राणायामं कुर्यात् ।
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदाऽयतप्राणः प्राणायामः स उच्यते ॥
एकावर्तः पूरकः स्यात्कुम्भको द्विगुणस्तथा ।
रेचकस्त्रिगुणः प्रोक्तः प्रवेशस्थितिनिर्गमैरिति ॥

ॐअग्निश्च मा मन्युश्च, मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् ।
यदऽह्ना पापमऽकार्षं, मनसा वाचा हस्ताभ्यां, पद्भ्यामुदरेण शिश्ना ।
अहस्तदऽवलुम्पतु, यत्किंचिद्दुरितं मयीदमऽहमाऽपोऽमृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥ इति सायमाऽऽचमनत्रयम्.

ॐसूर्यश्च मा मन्युश्च, मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् ।
यद्रात्र्या पापमकार्षं, मनसा वाचा हस्ताभ्यां, पद्भ्यामुदरेण शिश्ना ।
रात्रिस्तदऽवलुम्पतु, यत्किंचिद्दुरितं मयीदमऽहमाऽऽपोऽमृतयोनौ ।
सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ इति प्रातराऽऽचमनत्रयम्.

ॐआपः पुनन्तु पृथिवीं, पृथिवी पूता पुनातु माम् ।
पुनातु ब्रह्मणस्पतिर्ब्रह्म पूतं पुनातु माम् ॥
यदुच्छिष्टमऽभोज्यं वा, यद्वा दुश्चरितं मम ।
सर्वं पुनन्तु मामाऽऽपोऽसतां च प्रतिग्रहं जुहोमि स्वाहा ॥ इति मध्याह्ने त्रयम्

ॐआपो हि ष्ठा मयो भुव,-स्ता न ऊर्जे दधात न, महे रणाय चक्षसे ॥ १ ॥
यो वः शिवतमो रस,-स्तस्य भाजयते हनः, उशतीरिव मातरः ॥ २ ॥
तस्मा अरंगमाम वः यस्य क्षयाय जिन्वथ, आपो जनयथा च नः ॥ ३ ॥
ॐहिरण्यवर्णाः शुचयः पावका, यासु जातः कश्यपो यास्विन्द्रः ।
या अग्निं गर्भं दधिरे विरूपा, स्ता न आपः शंस्योना भवन्तु ॥ ४ ॥
ॐयासां देवा दिवि कृण्वंति भक्ष्यं, या अन्तरिक्षे बहुधा भवन्ति । या० ५ ॥
ॐयासां राजा वरुणो याति मध्ये, सत्याऽनृते अवपश्यञ्जनानाम् । या० ६ ॥
ॐशिवेन मा चक्षुषा पश्यताऽऽपः शिवया तन्वोपस्पृशत त्वचं मे ।
मधुश्च्युतः शुचयो याः पावका, स्ता न आपः शंस्योना भवन्तु ॥ ७ ॥
ॐशन्नो देवीरऽभीष्टय आपो भवन्तु पीतये, शंय्योरऽभिस्रवन्तु नः ॥ ८ ॥
ॐशन्न आपो धन्वन्यः, शन्नः सन्त्वऽनूप्याः ।
शन्नः समुद्रिया न आपः, शमुनः सन्तु कूप्याः ॥ ९ ॥
ॐआपो अस्मान्मातरः शुन्धयन्तु, घृतेन मा घृतप्वः पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्ति देवी, रुदिदाऽऽभ्यः शुचिराऽऽपूत एमि ॥ १० ॥
ॐइदमाऽऽपः प्रवहत, यत्किंचिद्दुरितं मयि ।
यद्वाऽहमऽभिदद्रोह, यद्वा शेप उताऽनृतम् ॥ ११ ॥

ॐमुञ्चन्तु मा शपथ्यादऽथो वारुण्यादुत ।
अथो यमस्य पड्वीशा,-त्सर्वस्माद्देव किल्बिषात् ॥ १२ ॥
ॐयज्जाग्रद्यत्सुप्तः, पापमऽभिजगाम ।
सर्वस्मान्मा तस्मादेऽनसः, प्रमुञ्चतु ॥ १३ ॥
ॐदधि क्राव्णो अकारिषं, जिष्णोरऽश्वस्य वाजिनः ।
सुरभि नो मुखा करत्प्राण आयूंषि तारिषत् ॥ १४ ॥ इति मार्जनमंत्राः.
ॐद्रुपदादिवोन्मुमुचानः, स्विन्नः स्नात्वी मलादिव ।
पूतं पवित्रेणेवाऽऽज्य, माऽऽपः शुन्धन्तु मैनसः ॥ इति वामे जलांजलित्रयं क्षिपेत्.
ॐऋतं च सत्यं चाभीद्धा, त्तपसोऽध्यऽजायत ।
ततो रात्रिरऽजायत, ततः समुद्रो अर्णवः ॥
समुद्रादऽर्णवादऽधि, संवत्सरो अजायत ।
अहोरात्राणि व्यदध,-द्विश्वस्य मिषतो वशी ॥
सूर्याचन्द्रमसौ धाता, यथापूर्वमऽकल्पयत् ।
दिवं च पृथिवीं, चाऽन्तरिक्षमऽथो स्वः ॥ इति जलमध्यस्थकरद्वयो जपेत्.
ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यमिति शिरो मार्जयेत् ॥
ॐअन्तश्चरसि भूतेषु, गुहायां विश्वतो मुखः ।
त्वं यज्ञस्त्वं वषट्कार, आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरो "मित्याऽऽचमनत्रयम्" ॥ "ततः प्राणायामः" "ततः सूर्याऽभिमुखो" "ॐ भूर्भुवः स्वः" ॥ ३ ॥ इति गायत्र्याऽभिमंत्रितांस्त्रीजलाञ्जलीनुत्क्षिप्य क्षिपेत् । प्रदक्षिणमाऽऽवृत्योर्ध्वबाहुरुदयन्तमिति सायंप्रातरुपतिष्ठेत ॥

ॐउद्वयन्तमसस्परि, ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्राः सूर्यमऽगन्म ज्योतिरुत्तमम् ॥ १ ॥
ॐउदुत्यं जातवेदसं, देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ २ ॥
ॐचित्रन्देवानामुदगादनीकं, चक्षुर्मित्रस्य वरुणस्याऽग्नेः ।
आ प्रा द्यावापृथिवी अन्तरिक्षं, सूर्य आत्मा जगतस्तस्थुषश्च ॥ ३ ॥
ॐतच्चक्षुर्देवहितं, पुरस्ताच्छुक्रमुच्चरत् ।
पश्येम शरदः शतं, जीवेम शरदः शतम् ॥ ४ ॥

ॐहंसः शुचिष,-द्वसुरऽन्तरिक्षस,-द्धोता वेदिषद,-तिथिर्दुरोणसत् ।
नृषद्वरस,-दृतसद्व्योमसद,-ऽब्जा गोजा, ऋतजा अद्रिजा ऋतम् ॥ ५ ॥
ॐविभ्राड्बृहत्पिबतु, सोम्यं मध्वायुर्दध,-द्यज्ञपता अविहुतम् ।
वात जूतयो, अभिरक्षत्यात्मना, प्रजा पिपर्ति बहुधा विराजति ॥ ६ ॥

इति मध्याह्नोपस्थितिः । अथ विष्णुं ध्यायन्पुरुषसूक्तं पठेत् ॥

ॐआनुष्टुभस्य सूक्तस्य, त्रिष्टुबऽन्तस्य देवता ।
विश्वात्मा पुरुषः साक्षादृषिर्नारायणः स्मृतः ॥ १ ॥
ॐपुरुषमेधाः पुरुषस्य नारायणस्याऽऽर्षम् ।
ॐसहस्रशीर्षाः पुरुषः, सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा,-ऽत्यऽतिष्ठद्दशांगुलम् ॥ १ ॥
पुरुष एवेदं सर्वं, यद्भूतं यच्च भव्यम् ।
उताऽमृतत्वस्येशानो, यदऽन्नेनाऽतिरोहति ॥ २ ॥
एतावानऽस्य महिमाऽतो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि, त्रिपादऽस्याऽमृतं दिवि ॥ ३ ॥
त्रिपादूर्ध्व उदैत्पुरुषः, पादोऽस्येहाऽभवत्पुनः ।
ततो विश्वं व्यक्राम,-त्साशनाऽनशने अभि ॥ ४ ॥
तस्माद्विराडऽजायत, विराजो अधिपूरुषः ।
स जातो अत्यरिच्यत, पश्चाद्भूमिमऽथो पुरः ॥ ५ ॥
यत्पुरुषेण हविषा, देवा यज्ञमऽतन्वत ।
वसन्तो अस्याऽऽसीदाऽऽज्यं, ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥
तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमऽग्रतः ।
तेन देवा अयजन्त, साध्या ऋषयश्च ये ॥ ८ ॥
तस्माद्यज्ञात्सर्वहुतः, संभृतं पृषदाऽऽज्यम् ।
पशूंस्तांश्चक्रे वायव्या,-नाऽऽरण्यान्ग्राम्यांश्च ये ॥ ७ ॥
तस्माद्यज्ञात्सर्वहुतः, ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्मा,-द्यजुस्तस्मादऽजायत ॥ ९ ॥
तस्मादऽश्वा अजायन्त, ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मा,-त्तस्माजाता अजावयः ॥ १० ॥

यत्पुरुषं व्यदधुः, कतिधा व्यकल्पयन् ।
मुखं किमऽस्य कौ बाहू, का ऊरू पादा उच्येते ॥ ११ ॥
ब्राह्मणोऽस्य मुखमाऽऽसीद्बाहू राजन्यः कृतः ।
ऊरू तदऽस्य यद्वैश्यः, पद्भ्यां शूद्रो अजायत ॥ १२ ॥
चन्द्रमा मनसो जात-श्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च, प्राणाद्वायुरऽजायत ॥ १३ ॥
नाभ्या आसीदऽन्तरिक्षं, शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रा,-त्तथा लोकानऽकल्पयन् ॥ १४ ॥
सप्ताऽस्याऽऽसन्परिधय,-स्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना, अबध्नन्पुरुषं पशुम् ॥ १५ ॥
यज्ञेन यज्ञमऽयजन्त देवा, स्तानि धर्माणि प्रथमान्याऽऽसन् ।
ते ह नाकं महिमानः सचन्त, यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

अथ संहारमुद्रां कृत्वा शिवं ध्यायन् शिवसूक्तं पठेत् ॥

ॐयज्जाग्रतो दूरमुदेति दैवं, तदु सुप्तस्य तथैवेति ।
दूरंगमं ज्योतिषां ज्योतिरेकं, तन्मे मनः शिवसंकल्पमऽस्तु ॥ १ ॥
येन कर्माण्यऽपसो मनीषिणो, यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदऽपूर्वं यक्षमऽन्तः प्रजानां, तन्मे मनः शिवसंकल्पमऽस्तु ॥ २ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च, यज्ज्योतिरऽन्तरऽमृतं प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म क्रियते, तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३ ॥
येनेदं भूतं भवनं भविष्यत्परिगृहीतमऽमृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता, तन्मे मनः शिवसङ्कल्पमऽस्तु ॥ ४ ॥
यस्मिन्नृचः साम यजूंषि यस्मि,-न्प्रतिष्ठिता रथनाभाविवाऽराः ।
यस्मिंश्चित्तं सर्वमोतं प्रजानां, तन्मे मनः शिवसङ्कल्पमऽस्तु ॥ ५ ॥
सुषारथिरऽश्वानिव यन्मनुष्या,न्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदऽजरं यविष्ठं, तन्मे मनः शिवसङ्कल्पमऽस्तु ॥ ६ ॥
अथ य एष एतस्मिन्मण्डले, पुरुषो यश्चैष हिरण्मयः पुरुषः ।
अथ य एष एतस्मिन्मण्डले, पुरुषोऽयमेव सोयं दक्षिणेऽक्षन्पुरुषः ॥ ७ ॥

अथ उपस्थितिः.

शुक्रियं रुद्रस्य ॥

य उदगात्पुरस्तान्महतो अर्णवा,-द्विभ्राजमानः सरिरस्य मध्ये ।

स मामृषभो रोहिताक्षः, सूर्यो विपश्चिन्मनसा पुनातु ।

यद्ब्रह्माऽवादिष्म तन्मा मा हिंसी,-त्सूर्याय विभ्राजाय वै नमो नमः ॥

अ, नाभौ । उ,हृदि । म, शिरसि ॥ भूः, पादयोः । भुवः, हृदि । स्वः शिरसि ॥ ॐभूः, अङ्गुष्ठाभ्यां नमः । भुवः, तर्जनीभ्यां नमः । स्वः, मध्यमाभ्यां नमः । महः, अनामिकाभ्यां नमः । जनः, कनिष्ठिकाभ्यां नमः । तपः सत्यं, करतलकरपृष्ठाभ्यां नमः ॥ भूः, पादयोः । भुवः, जान्वोः । स्वः गुह्ये । महः, नाभौ । जनः, हृदि । तपः, कण्ठे । सत्यं, शिरसि ॥ ॐभूः हृदयाय नमः । भुवः, शिरसे स्वाहा । स्वः, शिखायै वषट् । महः, कवचाय हुं । जनः, नेत्राभ्यां वौषट् । तपः सत्य,मऽस्त्राय फट् ॥ तत्सवितु,रङ्गुष्ठाभ्यां नमः । वरेण्यं, तर्जनीभ्यां नमः । भर्गो देवस्य, मध्यमाभ्यां नमः । धीमहि, अनामिकाभ्यां नमः । धियो योनः, कनिष्ठिकाभ्यां नमः ॥ प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ॥ तत्पादयोः । सवितुर्जान्वोः । वरेण्यं, कट्यां भर्गो, नाभौ । देवस्य, हृदये । धीमहि, कण्ठे । धियो, नासिकायां । यश्चक्षुषे । नः, ललाटे । प्रचोदयात्, शिरसि ॥ तत्सवितुर्हृदयाय नमः । वरेण्यं, शिरसे स्वाहा । भर्गो देवस्य, शिखायै वषट् । धीमहि कवचाय हुं । धियो योनः नेत्राभ्यां वौषट् । प्रचोदयादऽस्त्राय फट् ॥ ॐआप,स्तनयोः । ज्योतिर्नेत्रयोः । रसोमुखे । अमृतं, ललाटे । ब्रह्मभूर्भुवः स्वरों, शिरसि ॥

अथ मुद्राः ॥

तत्समाय नमः । स, संपुटाय नमः । वि, विततांय नमः । तुर्विस्तीर्णाय० ।
व, द्विमुखाय० । रे, त्रिमुखाय० । ण्य, चतुर्मुखाय नमः । अं, पंचमुखाय० ।
भ, षण्मुखाय । र्गो, अधोमुखाय । दे, व्यापकाञ्जलये । व, शकटाय न० ।
स्य, यमपाशाय । धी, ग्रन्थिकायै । म, संमुखोन्मुखाय । हि, विलम्बाय ।
धी, मुष्टिकायै नमः । यो, मीनाय । यो, कूर्माय । नः, वराहाय नमः ।
प्र, सिंहाक्रान्ताय । चो, महाक्रान्ताय । द, मुद्गराय । या, त्पल्लवाय नमः ॥

ततः प्राणायामः ॥

तत्सवितुरिति मंत्रस्य। विश्वामित्र ऋषिः। गायत्रं छंदः। सविता देवता। आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं चतुर्वर्गसिद्ध्यर्थे जपे विनियोगः॥

अथ ध्यानम्॥ मुक्ताविद्रुमहेमनीलधवल, च्छायैर्मुखैस्त्रीक्षणै-

र्युक्तामिन्दुनिबद्धरत्नमुकुटां, तत्त्वाऽऽत्मवर्णात्मिकाम्।

गायत्रीं वरदाऽभयाऽङ्कुशकरां, शूलं कपालं गुणं

शङ्खं चक्रमऽथाऽरविन्दयुगलं, हस्तैर्वहन्तीं भजे॥ १॥ इति.

आगच्छ वरदे देवि, त्र्यक्षरे ब्रह्मवादिनि।

गायत्रि छन्दसां मात,र्ब्रह्मयोने नमोऽस्तु ते। २॥ इति गायत्री.

ॐभूर्भुवः स्वस्तत्सवितुर्वरेण्यं, भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयादों,

ततः प्राणायामः॥ दशभिर्जन्मचरितं, शतेन च पुरा कृतम्।

त्रियुगोत्थं सहस्रेण, गायत्री हन्ति किल्बिषम्।

देवा गातु श्रोत्रियाः,। देवा गातुविदो, गातुं वित्वा गातुमित। मनसस्पत इमं देवयज्ञं स्वाहा, वाचे स्वाहा वाते धाः। इति जपनिवेदनम्. अथ दिङ्नुतिः॥

ॐनमः प्राच्यै दिशे याश्च देवता, एतस्यां प्रतिवसन्ति, एताभ्यश्च वो नमः॥१॥ नमोऽवान्तरायै दिशे०॥ २॥ नमो दक्षिणायै दिशे०॥३॥ नमोऽवान्तरायै०॥४॥ नमः प्रतीच्यै दिशे०॥ ५॥ नमोऽवान्तरायै०॥ ६॥ नम उदीच्यै दिशे०॥ ७॥ नमोऽवान्तरायै०॥ ८॥ नमऊर्ध्वायै०॥ ९॥ नमोऽधरायै दिशे याश्च०॥ १०॥

नमो ब्रह्मणे नमो अस्त्वऽग्नये, नमः पृथिव्यै नम ओषधीभ्यः।

नमो वाचे नमो वाचस्पतये, नमो विष्णवे बृहते कृणोमि॥ २॥

इत्येतासामेव देवतानां सामीप्यं सार्ष्टितां सायुज्यं सलोकतामाप्नोति

य एवं विद्वान् स्वाध्यायमऽधीते,॥ इति तर्पणम्.

ब्रह्मादयः सर्वे देवास्तृप्यन्तु "कण्ठोपवीती" सनकादयः सर्वे ऋषयस्तृ०॥ २॥

अपसव्येन॥ अग्निष्वात्तादयः सर्वे पितरस्तृप्यन्तु॥ ३॥

देवताभ्यः पितृभ्यश्च, महायोगिभ्य एवच।

नमः स्वाहायै स्वधायै नित्यमेव नमो नमः॥

ॐ तत्सद्ब्रह्माऽद्य तावत्तिथावित्यादि० आत्मनो वाङ्० नित्यकर्मनिमित्तं पिता अमुकोऽमुकगोत्रः स्वधानमस्तृप्यतां तृप्यतां तृप्यताम्। पितामहः०। २। प्रपिता-

महः । ३ । माता० । ४ । पितामही० । ५ । प्रपितामही० । ६ । मातामहः० । ७ । प्रमातामहः० । ८ । वृद्धप्रमातामहः० । ९ । मातामही० । १० । प्रमातामही० । ११ । वृद्धप्रमातामही० । १२ । इत्थं सर्वान् सम्बन्धिनश्च तर्पयेत् ।

मातृपक्ष्यास्तु ये केचिद्ये चाऽन्ये पितृपक्षजाः ।
गुरुश्वशुरबन्धूनां, ये कुलेषु समुद्भवाः
ये प्रेतभावमाऽऽपन्ना, ये चाऽन्ये श्राद्धवर्जिताः ।
जलदानेन ते सर्वे, लभन्तां तृप्तिमुत्तमाम् ।

समस्तमातापितृभ्यो द्वादश देवतेभ्यः पितृभ्यो हिमपानं स्वधा । क्षीरपानं स्वधा । मधुपानं स्वधा । तिलोदकं स्वधा । उदकतर्पणं स्वधा । हिमं हिमं । रजतं रजतम् । "सव्येन" ॐनमो देवेभ्यः । कण्ठोपवीती । स्वाहा ऋषिभ्यः । अपसव्येन । स्वधा पितृभ्यः । सव्येन; आब्रह्मस्तम्बपर्यन्तं.

ब्रह्माण्डं सचराऽचरं जगत्तृप्यतु तृप्यतु तृप्यतु एवमस्तु ॥
नमो धर्मनिधानाय, नमः स्वकृतसाक्षिणे ।
नमः प्रत्यक्षदेवाय, भास्कराय नमो नमः इति सूर्ये प्रणतिः.
शान्तिः पुष्टिस्तथा तुष्टिः, सन्तु मे त्वत्प्रसादतः ।
सर्वपापप्रशांतिश्च, तीर्थराज नमोऽस्तुते । इति तीर्थप्रणतिः.

इति सन्ध्योपासनाविधिः ॥
श्रीकृष्णार्पणमऽस्तु ॥



## नैवेद्यमंत्राः ।

ॐअथ नैवेद्यमंत्राः ॥

अमृतेशयमुद्रया अमृतीकृत्य । अमृतमऽस्तु अमृतायित्वा नैवेद्यं ।

सावित्राणि सावित्रस्य, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामाऽऽदधे ॥ महागणपतये, कुमाराय, श्रियै, सरस्वत्यै, लक्ष्म्यै, विश्वकर्मणे, द्वार्देवताभ्यः, प्रजापतये, ब्रह्मणे, कलशदेवताभ्यः, ब्रह्मविष्णुमहेश्वरदेवताभ्यः, चातुर्वेदेश्वराय, सानुचराय ऋतुपतये नारायणाय, दुर्गायै, त्र्यम्बकाय, वरुणाय, यज्ञपुरु-

षाय, अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः, । भगवते वासुदेवाय, सङ्कर्षणाय, प्रद्युम्नाय, अनिरुद्धाय, सत्याय, पुरुषाय, अच्युताय, माधवाय, गोविन्दाय, सहस्त्रनाम्ने विष्णवे, लक्ष्मीसहिताय नारायणाय, । भगवते भवाय देवाय, शर्वाय देवाय, रुद्राय देवाय, पशुपतये देवाय, उग्राय देवाय, भीमाय देवाय, महादेवाय, ईशानायदेवाय, ईश्वराय देवाय, उमासहिताय शिवाय, पार्वतीसहिताय परमेश्वराय, । भगवते विनायकाय, एकदन्ताय, कृष्णपिंगलाय, गजाननाय, लम्बोदराय, भालचन्द्राय, हेरम्बाय, आखुरथाय, विघ्नेशाय, विघ्नभक्ष्याय, वल्लभासहिताय श्रीमहागणेशाय, । क्लींकांकुमाराय, षण्मुखाय, मयूरवाहनाय, सेनाधिपतये कुमाराय, । भगवते ह्रांह्रींसःसूर्याय, सप्ताश्वाय, अनश्वाय, एकाश्वाय, नीलाश्वाय, प्रत्यक्षदेवाय, परमार्थसाराय, तेजोरूपाय, प्रभासहिताय, आदित्याय । भगवत्यै अमायै, कामायै, चार्वंग्यै, टङ्कधारिण्यै, तारायै, पार्वत्यै, यक्षिण्यै, श्रीशारिकाभगवत्यै, श्रीशारदा भगवत्यै, श्रीमहाराज्ञीभग०, श्रीज्वालाभगवत्यै, व्रीडाभगवत्यै, वैखरीभगवत्यै, वितस्ताभ०, गङ्गाभ०, यमुनाभ०, कालिकाभ०, सिद्धलक्ष्म्यै, महालक्ष्म्यै, महात्रिपुरसुन्दर्यै, सहस्त्रनाम्न्यै, देव्यै, भवान्यै । अभयंकरीदेव्यै, क्षेमंकरीभगवत्यैसर्वशत्रुघातिन्यै, इह राष्ट्राधिपतये भैरवाय, । इन्द्राय वज्रहस्ताय, अग्नये शक्तिहस्ताय, यमाय दण्डहस्ताय, नैर्ऋतये खड्गहस्ताय, वरुणाय पाशहस्ताय, वायवे ध्वजहस्ताय, कुबेराय गदाहस्ताय, ईशानाय त्रिशूलहस्ताय, ब्रह्मणे पद्महस्ताय, विष्णवे चक्रहस्ताय, अनन्तादिभ्यः अष्टाभ्यः कुलनागदेवताभ्यः, अग्न्यादित्याभ्यां, वरुणचन्द्रमोभ्यां, कुमारभौमाभ्यां, विष्णुबुधाभ्यां, इन्द्राबृहस्पतिभ्यां, सरस्वतिशुक्राभ्यां, प्रजापतिशनैश्चराभ्यां, गणपतिराहुभ्यां, रुद्रकेतुभ्यां, ब्रह्मध्रुवाभ्यां, अनन्ताऽगस्त्याभ्यां, ब्रह्मणे, कूर्माय, ध्रुवाय, अनन्ताय, हरये, लक्ष्म्यै, कमलायै, शिख्यादिभ्यः पंचचत्वारिंशद्वास्तोष्पतियागदेवताभ्यः, ब्राह्म्यादिभ्यो मातृभ्यः, गौर्यादिभ्यो मातृभ्यः, ललितादिभ्योमातृभ्यः, दुर्गाक्षेत्रगणेश्वरदेवताभ्यः, राकादेवताभ्यः, त्रिकादेवताभ्यः, सिनीवालीदेवताभ्यः, यामीदेवताभ्यः, रौद्रीदेवताभ्यः, वारुणीदे०, बार्हस्पतिदेवताभ्यः, ॐभूर्देवताभ्यः, ॐभुवःदेवताभ्यः, ॐस्वर्देवताभ्यः, ॐभूर्भुवःस्वर्देवताभ्यः, अखण्डब्रह्माण्डयागदेवताभ्यः, धूर्म्यैः, उपधूर्म्यैः, महागायत्र्यै, सावित्र्यै, सरस्वत्यै, हेरकादिभ्यो वटुकादिभ्यः ॥

उत्पन्नमऽमृतं दिव्यं, प्राक्क्षीरोदधिमन्थनात् ।
अन्नमऽमृतरूपेण, नैवेद्यं प्रतिगृह्यताम् ॥

इष्टदेवताध्यानं च पठित्वा तत्सद्ब्रह्म इत्यादि अमुककर्मनिमित्तं ॐनमो नैवेद्यं निवेदयामि नमः ॥

याः काश्चिद्योगिनी रौद्राः सौम्या घोरतराः पराः ।
खेचरी भूचरी रामा स्तुष्टा भवंतु मे सदा ॥

आकाशमातृभ्योऽन्नं नमः, आकाशमातृभ्यः समालभनं गन्धोनमः, अर्घोनमः पुष्पंनमः, । इष्टदेवं ध्यात्वाऽमुकदेवाय पायसं मोदकान् पक्वान्नं अपूपान् वा अन्नादि समर्पयामि नमः ॥

योऽस्मिन्निवसति क्षेत्रे क्षेत्रपालः सकिंकरः ।
तस्मै निवेदयाम्यऽद्य, बलिं पानीयसंयुतम् ॥

क्षां क्षेत्राधिपतयेऽन्नं नमः, रां राष्ट्राधिपतये अन्नं नमः, सर्वाभयवरप्रद मयि पुष्टिं पुष्टिपतिर्दधातु । आपन्नोऽस्मि शरण्योऽसि, सर्वावस्थासु सर्वदा, इत्यादि क्षमा पुष्पाणि दत्वा उभाभ्यां जानुभ्यां पाणिभ्यां शिरसा च उरसा मनसा च नमस्कारं करोमि नमः । नमोब्रह्मणे इति तर्पणम्.

इति नैवेद्यमंत्रविधिः ॥

---

## ॐ अथ विष्णुपञ्चायतनपूजाविधिः

ॐ अस्य श्री आसनशोधनमंत्रस्य, मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्मो देवता । आसनशोधने विनियोगः ॥ मेरुपृष्ठऋषये नमः शिरसि, सुतलं छन्दसे नमः मुखे, कूर्मो देवतायै नमः हृदि, आसनशोधने विनियोगाय नमः सर्वांगेषु ॥ अथ नमस्कारः ॥ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चाऽऽसनम् ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामऽसि ॥ इत्याऽऽसनम् । ह्रीं पृथिव्यै आधारशक्त्यै समालभनं गन्धो नमः, अर्घो नमः, पुष्पं नमः ॥ ततो नमस्कारः

शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥

अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि ।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ २ ॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ ३ ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षान्महेश्वरः ।
गुरुरेव जगत्सर्वं तस्मै श्रीगुरवे नमः ॥ ४ ॥
महाबले महोत्साहे महाभयविनाशिनि ।
त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ॥ ५ ॥

ॐगुरवे नमः, परमगुरवे नमः, परमेष्ठिने गुरवे नमः, परमाचार्याय न० आद्यसिद्धेभ्यो न० ॥ ॐ अनाभावित्यादि । ब्रह्मभूर्भुवः स्वरों शिरसीत्यन्तं पृ० १० कृत्वा ॐ तद्विष्णोः परमं पदं, हृ० । सदा पश्यन्ति सूरयः, शिरसे० । दिवीव चक्षुराऽऽततं, शिखा० । तद्विप्रासो विपन्यवो, कव० । जागृवांसः समिन्धते, नेत्र० । विष्णोर्यत्परमं पदं, अस्त्रा० ॥ यो रुद्रो अग्नौ, हृ० । यो अप्सु य ओषधीषु, शिर० । यो वनस्पतिषु, शिखा० । यो रुद्रो विश्वाभुवना विवेश, कव० । तस्मै रुद्राय नेत्र० । नमो अस्तु देवा, अस्त्राय फट् ॥ गणानान्त्वा गणपतिं हवामहे, हृ० । कविं कवीनां, शि० । उपमश्रवस्तमं, शिखा० । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत, कच० । आनः श्रृण्वन्, नेत्रा० । ऊतिभिः सीद सादनं, अस्त्रा० ॥ चित्रं, पादयोः । देवानां, जङ्घयोः । उद्गा, जान्वोः । अनीक मूर्वोः । चक्षुः, शिश्ने । मित्रस्य, गुह्ये । वरुणस्य, नाभौ । अग्ने, हृदि । आप्राद्यावापृथिवी, कण्ठे । अन्तरिक्षं, बाह्वोः । सूर्य, मुखे । आत्मा, नासिकायां । जगतः, नेत्रयोः । तस्थुषः, ललाटे । च, शिरसि ॥ जात, शिखायां । वेदसे, ललाटे । सुनवाम, कर्णयोः । सोमं, नासिकायां । अराति, चक्षुषोः । यत, ओष्ठयोः । नि, दन्तेषु । दहाति, तालुनि । वेद, जिह्वायां । स, ग्रीवायां । नः, बाह्वोः । पर्षत्, हृदि । अति, स्तनयोः । दुर्, कुक्षौ । गाणि, नाभौ । विश्वा, पृष्ठे । नाव, पाण्योः । इव, वृषणयोः । सिन्धुं, शिश्ने । दुर्, कट्यां । इत, ऊर्वोः । अति जङ्घयोः । अग्निः, पादयोः ॥ सर्वासु दिक्षु तिलान्विक्षिपन्,

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ पाशाण्डकारिणो ये वै भूता भूम्यन्तरिक्षगाः । दिवि लोके गता

दुष्टास्ते नश्यन्तु शिवाज्ञया ॥ २ ॥ प्राणायामं कुर्यात् तीर्थेस्त्रयं० । वसोः पवित्रमऽसि शतधारं वसूनां, पवित्रमऽसि, सहस्रधार, मऽयक्ष्मा वः प्रजया संसृजाभि, रायस्पोषेण, बहुला भवन्तीः । इति पवित्रधारणम्.

परमात्मने पुरुषोत्तमाय पञ्चभूतात्मकाय, विश्वाऽत्मने मंत्रनाथाय, आत्मने नारायणाय, आधारशक्त्यै समालभनं गन्धो नमः, अर्घो नमः, पुष्पं नमः ॥

इति स्वात्मने गन्धादि ।

स्वप्रकाशो महादीपः सर्वतस्तिमिरापहः ।
प्रसीद मम गोविन्द दीपोयं परिकल्पितः ॥
वनस्पतिरसो दिव्यो गन्धाढ्यो गन्धवत्तमः ।
आह्वानं सर्वदेवानां धूपोऽयं परिकल्पितः ।
नमो धर्मनिधानाय नमः स्वकृतसाक्षिणे ।
नमः प्रत्यक्षदेवाय भास्कराय नमो नमः ॥
यत्राऽस्ति माता न पिता न बन्धुर्भ्राताऽपि नो यत्र सुहृज्जनश्च ।
न ज्ञायते यत्र दिनं न रात्रिस्तत्राऽऽत्मदीपं शरणं प्रपद्ये ॥

आत्मने नारायणाय, आधारशक्त्यै धूपदीपसंकल्पात्सिद्धिरऽस्तु धूपोनमः, दीपो नमः । ओंतत्सद्ब्रह्मा० ऋतुपतये नारायणाय, "मार्गशीर्षे" रुक्मिणीसहितायकृष्णाय श्रीसहिताय केशवाय । "पौषे" प्रियासहि०, अनन्ताय, वागीश्वरीस०, नारायणाय । "माघे" प्रीतिस० अच्युताय, कान्तास०, माधवाय । "फाल्गुने" शक्तिस० चक्रिणे, क्रियास० गोविन्दाय । "चैत्रे" सिद्धिस० वैकुण्ठाय, मतिस० विष्णवे । "वैशाखे" शोभास० जनार्दनाय, विभूतिस० मधुसूदनाय । "ज्येष्ठे" महिमास० उपेन्द्राय, इच्छास० त्रिविक्रमाय । "आषाढे" लक्ष्मीस० यज्ञपुरुषाय, धृतिस०, वामनाय । "श्रावणे" कान्तिस० वासुदेवाय, रतिस० श्रीधराय । "भाद्रपदे" प्राप्तिस० हरये, मायास० हृषीकेशाय । "आश्वयुजे" प्राकाम्यास० योगीश्वराय, धीस० पद्मनाभाय । "कार्त्तिके" लघिमास० पुण्डरीकाक्षाय, गरिमास० दामोदराय । "मलिम्लुचे" सत्यभामास० नरकारये, निष्कलास० महामार्ताण्डाय दुर्गायै इत्यादि । सहस्रनाड्यै देव्यै भवान्यै पृ० १३ विष्णुपञ्चायतनदेवताभ्यो धूपो नमः दीपो नमः ॥ "अपसव्येन" नमः पितृभ्यः० नित्यकर्मनिमित्तं पित्रे, पितामहाय; प्रपितामहाय । मात्रे, पितामह्यै, प्रपितामह्यै ।

मातामहाय, प्रमातामहाय, वृद्धप्रमातामहाय । मातामह्यै, प्रमातामह्यै, वृद्धप्रमातामह्यै समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यः धूपः स्वधा दीपः स्वधा ॥ "सव्येन" संव्वः सृजामि हृदयं, संसृष्टं मनो असुवः ॥ १ ॥ संसृष्टस्तन्वः सन्तु वः संसृष्टं, प्राणो अस्तु वः ॥ २ ॥ सव्या वः प्रियास्तन्वः संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियाः संप्रियास्तन्वो मम ॥ ३ ॥ इति पुष्पत्रयंजलपात्रे क्षिप्त्वा, अश्विनोरिति देवस्य जीवाधानं देयम् । अश्विनोः प्राणस्तौ ते प्राणान्दत्तान्तेन जीव । मित्रावरुणयोः प्राणस्तौ ते प्राणन्दत्ता० । बृहस्पतेः प्राणःसते प्राणान्दत्तान्तेन जीव ॥

ॐ अ, नाभावित्यादि देवस्य देहवन् न्यासं कुर्यात् ॥ ॐ भूः पुरुषमित्याऽऽवाहनं ॐ भूः पुरुषमाऽऽवाहयामि नमः, ॐ भुवः पुरुषमाऽऽ०, ॐ स्वः पुरुषमाऽऽ० ॐ भूर्भुवः स्वः पुरुषमाऽऽवा० ॥ ३ ॥ ॐ भूर्भुवः स्वस्तत्स० ॥ ३ ॥ नमोऽस्त्वनन्ताय ॥ ३ ॥ वासुदेवाय विद्महे, लक्ष्मीनारायणाय धीमहि, तन्नो विष्णुः प्रचोदयात् ॥ ३ ॥ जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन । नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ ३ ॥ ॐ नमः कारणवामनाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ३ ॥ विश्वरूपाय विद्महे, विष्वक्सेनाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥ ३ ॥ नरसिंहाय वि०, नरकोत्तारणाय धी०, तन्नो विष्णुः० ॥ ३ ॥ तत्पुरुषाय वि०, महादेवाय धी०, तन्नः शिवः प्र० ॥ ३ ॥ तत्पुरुषाय वि०, वक्रतुण्डायधी०, तन्नोदन्ती प्र० ॥ ३ ॥ भास्कराय वि०, सहस्ररश्मये धी०, तन्नः सूर्यः प्र० ॥ ३ ॥ सुभगायै वि०, काममालिन्यै धी०, तन्नो दुर्गा प्र० ॥ ३ ॥ ॐ तत्सद्ब्रह्म० इत्यादि ऋतुपतेः नारायणस्य, भगवतः, वासुदेवस्य, संकर्षणस्य, प्रद्युम्नस्य, अनिरुद्धस्य, सत्यस्य, पुरुषस्य, अच्युतस्य, माधवस्य, गोविन्दस्य, सहस्रनाम्नः विष्णोः लक्ष्मीसहितस्य, नारायणस्य । भगवतः भवस्य देवस्य, शर्वस्य देवस्य, रुद्रस्य देवस्य, पशुपतेर्देवस्य, उग्रस्य देवस्य, भीमस्य देवस्य, महादेवस्य, ईशानस्य देवस्य ईश्वरस्य देवस्य, उमासहितस्य शिवस्य, पार्वतीसहितस्य परमेश्वरस्य ।

भगवतः विनायकस्य, एकदन्तस्य, कृष्णपिंगलस्य, गजाननस्य लम्बोदरस्य, भालचन्द्रस्य, हेरम्बस्य आखुरथस्य, विघ्नेशस्य, विघ्नभक्ष्यस्य, वल्लभासहितस्य श्रीमहागणेशस्य । भगवतः ह्रांह्रींसः सूर्यस्य, सप्ताश्वस्य, अनश्वस्य, एकाश्वस्य, नीलाश्वस्य,

प्रत्यक्षदेवस्य, परमार्थसारस्य, तेजोरूपस्य, प्रभासहितस्य आदित्यस्य । भगवत्याः, अमायाः, कामायाः, चार्वंग्याः, टंकधारिण्याः, तारायाः, पार्वत्याः, यक्षिण्याः, श्रीशारिकाभगवत्याः श्रीशारदा भ०, श्रीमहाराज्ञीभ०, श्रीज्वालाभ०, व्रीडाभ०, वैखरीभ०, वितस्ताभ०, गङ्गाभ०, यमुनाभ०, कालिकाभ०, सिद्धलक्ष्म्याः, महालक्ष्म्याः, महात्रिपुरसुन्दर्याः, सहस्रनाम्न्यः देव्याः, भवान्याः, विष्णुपञ्चायतनदेवतानामाऽऽत्मनो वाङ्० श्रीविष्णुप्रीत्यर्थं विष्णुपञ्चायतनपूजनमर्चामऽहं करिष्ये ॐ कुरुष्व ॥ तिलसर्षपयवान्विकीर्य ॥ पुरुष एवेदं, ध्रुवा द्यौ० इत्याऽऽसनम् । ऋतुपतेर्नारायणस्य भगवतः वासुदेवस्य इत्यादेः इदमासनं नमः ऋतुपतये नारायणाय भगवते वासुदेवाय इत्यादिभ्यः युष्मान् वः पूजयामि ॐ पूजय ॥ सहस्रशीर्षापु० । युञ्जते मन उत युंजते धियो विप्रा विप्रस्य बृहतो विपश्चितः । विहोत्रा दधे वयुना विदेक इन्मयिदेवस्य सवितुः परिष्टुतिः । तद्विष्णोः० । ऋतुपतिं नारायणं, भगवन्तं वासुदेवं, संकर्षणं, प्रद्युम्नं, अनिरुद्धं, सत्यं, पुरुषं, अच्युतं, माधवं, गोविन्दं सहस्रनामानं, विष्णुं, लक्ष्मीसहितं, नारायणं । भगवन्तं, भवंदेवं, शर्वंदेवं, रुद्रंदेवं, पशुपतिंदेवं, उग्रंदेवं, भीमंदेवं, महादेवं, ईशानंदेवं, ईश्वरंदेवं, उमासहितं शिवं, पार्वतीसहितं परमेश्वरं, । भगवन्तं, विनायकं, एकदन्तं, कृष्णपिङ्गलं, गजाननं, लम्बोदरं, भालचन्द्रं, हेरम्बं आखुरथं, विघ्नेशं, विघ्नभक्ष्यं, वल्लभासहितं श्रीमहागणेशं । भगवन्तं ह्रांह्रींसः सूर्यं, सप्ताश्वं, अनश्वं, एकाश्वं, नीलाश्वं, प्रत्यक्षदेवं, परमार्थसारं, तेजोरूपं, प्रभासहितं आदित्यं, । भगवतीं, अमां, कामां, चार्वंगीं, टङ्कधारिणीं, तारां, पार्वतीं, यक्षिणीं, श्रीशारिकाभगवतीं, श्रीशारदांभ०, श्रीमहाराज्ञीभ०, श्रीज्वालाभ०, व्रीडाभ०, वैखरीभ०, वितस्ताभ०, गङ्गाभ०, यमुनाभ०, कालिकाभ०, सिद्धलक्ष्मीं, महालक्ष्मीभ०, महात्रिपुरसुन्दरीं, सहस्रनाम्नीं देवीं, भवानीं । विष्णुपंचायतनदेवता आवाहयिष्यामि ॐ आवाहय ॥

अवाहयाम्यऽमरवृन्दनुताङ्घ्रियुग्मं, लक्ष्मीपतिं भुवनकारणमऽप्रमेयम् ।
आद्यं सनातनतनुं प्रणवासनस्थं, पूर्णेन्दुभास्करहुताशसहस्ररूपम् ॥ १ ॥
ध्येयं परं सकलतत्वविदां वरेण्यं, वाराहकापिलनृकेसरिसौम्यमूर्तिम् ।
श्रीवत्सकौस्तुभमहामणिभूषिताङ्गं, कौमोदिकीकमलकम्बुरथाङ्गहस्तम् ॥ २ ॥

त्वं सर्वगोऽसि भगवन्किल यद्यपि त्वामाऽवाहयामि हि यथा व्यजनेन वायुम् ।
गूढो यथैव दहनो मथनादुपैति, ह्यावाहितोऽसि त्वमुपैषि तथैव चाऽर्चाम् ॥ ३॥
मालाधराऽच्युत विभो परमात्ममूर्ते, सर्वज्ञ नाथ परमेश्वर सर्वशक्ते ।
आगच्छ मे कुरु दयां प्रतिमां भजस्व, पूजां गृहाण मदऽनुग्रहकामयाऽद्य ॥ ४ ॥
आवाहयामि मणिसन्निभमात्मबिम्बे, मायापुरे हृदयपंकजसन्निविष्टम् ।
श्रद्धानदीविमलदत्तजलाभिषेकं, भावाष्टपुष्पविधिना हरिमर्चयामि ॥ ५ ॥
गोक्षीराभं पुण्डरीकायताक्षं, छत्राश्वाद्यैर्भूषणैर्भूषिताङ्गम् ।
श्रीभूमिभ्यामऽर्चितं योगपीठे, स्वस्थं वन्दे पूजितं पद्मजेन ॥ ६ ॥
ज्योतिष्मन्तं सर्वभूतान्तरस्थं, ओंकाराख्यं योगिभिर्ध्यानगम्यम् ।
स्वङ्गैः शक्तैः स्वायुधैर्नित्यसेव्यं, सर्वाकारं विष्णुमाऽऽवाहयामि ॥ ६ ॥
शिवस्य । लिङ्गेऽत्र भक्तदयया क्षणमात्रमेकं, स्थाणुं विधाय भव मद्विहितां पुरारे ।
सर्वेश ! विश्वमय ! हृत्कमलाधिरूढः पूजां गृहाण भगवन्भव मेऽद्य तुष्टः ॥७॥
गणेशस्य । शैलेश्वरस्य तनयार्भक भक्तविघ्ननाशाय हस्तधृतदण्डकुठारपाश ! ।
द्वारेश सर्वगणनायक पद्महस्त, पूजां गृहाण भगवन्भव मेऽद्य तुष्टः ॥ १ ॥
सूर्यस्य । ब्रह्माण्डगेहपरिदीपक शम्भुमूर्ते ! तेजोनिधान ! खचरेश्वर पूर्वदेव ।
सर्वोपचारविधिना विहितां मयाऽद्य, पूजां गृहाण भगवन्भव मेऽद्य तुष्टः ॥१॥
दुर्गायाः । श्रीशारदे ! सुरवरे ! त्रिपुरे ! सुरेशि ! दुर्गे ! भवानि ! खलु वैखरि विश्वमातः
शर्वार्धदेहनिलये ! परिवारयुक्ता, पूजां गृहाण सुभगा भव मेऽद्य तुष्टा ॥१॥
भगवन्पुण्डरीकाक्ष भक्तानुग्रहकारक ।
अस्मद्दयानुरोधेन सन्निधानं कुरु प्रभो ॥ ३ ॥

इत्याहूय तु गायत्रीं त्रिःसमुच्चार्य तत्ववित् । मनसा चिन्तितैर्द्रव्यैर्देवमात्मनि पूजयेत् । तेजोरूपं ततः क्षिप्त्वा प्रतिमायां पुनर्यजेत् ॥ यवान्विकीर्य, प्राणायामं कुर्यात् पाद्यार्थमुदकं नमः ॥ शन्नोदेवी० । लाजाश्च कुंकुमंचैव, सर्वौषधिसमन्वितम् । दर्भाङ्कुरं जलं चैव पञ्चाङ्गं पाद्यलक्षणम् । 'भगवन्तः पाद्यं पाद्यम्' ॥ २ ॥ एतावानऽस्य० पृ० ८ हिरण्यवर्णाः०, ऋचः ४ । ऋतुपतये इत्यादिभ्यः 'पाद्यं नमः । 'शेषं निवार्य' 'पुनः' शन्नो देवी० । आपः क्षीरं कुशाग्राणि घृतं च दधि तण्डुलाः । यवाः सिद्धार्थकाश्चेति ह्यर्घ्यमऽष्टाङ्गमुच्यते । 'भगवन्तः अर्घ्यं ॥ २ ॥' त्रिपादूर्ध्व० । पृ० ८ ओंआपो हि ष्ठा० 'ऋ० ३' ऋतुपते नारायण, भगवन् वासुदेव, संकर्षण,

प्रद्युम्न, अनिरुद्ध, सत्य, पुरुष। अच्युत, माधव, गोविन्द, सहस्रनामन् विष्णो लक्ष्मीसहित नारायण। भगवन्, भवदेव, शर्वदेव, रुद्रदेव, पशुपते देव, उग्रदेव, भीमदेव, महादेव, ईशानदेव, ईश्वरदेव, उमासहित शिव, पार्वतीसहित परमेश्वर,। भगवन् विनायक, एकदन्त, कृष्णपिंगल, गजानन, लम्बोदर, भालचन्द्र, हेरम्ब, आखुरथ, विघ्नेश, विघ्नभक्ष, वल्लभासहित श्रीमहागणेश। भगवन् ह्रांह्रींसः सूर्य, सप्ताश्व, अनश्व, एकाश्व, नीलाश्व, प्रत्यक्षदेव, परमार्थसार, तेजोरूप, प्रभासहित आदित्य भगवति, अमे, कामे, चार्वंगि, टङ्कधारिणि, तारे, पार्वति, यक्षिणि, श्रीशारिकाभगवति, श्रीशारदाभ० श्रीमहाराज्ञीभ०, श्रीज्वालाभ०, व्रीडाभ०, वैखरीभ०, वितस्ताभ०, गङ्गाभ०, यमुनाभ०, कालिकाभ०, सिद्धलक्ष्मि, महालक्ष्मि, महात्रिपुरसुन्दरि, सहास्रनाम्नि देवि भवानि विष्णुपञ्चायतनदेवता 'इदं वः अर्घ्यं नमः' ॥ तस्माद्विराड० पृ० ८ शन्न आपो० पृ० ६ ऋतुपतये, इत्यादिभ्य आचमनीयं नमः। यत्पुरुषेण० पृ० ८ इदमाऽऽपः पृ० ६ ऋतुपतये इत्यादिभ्यः मन्त्रस्नानीयं नमः॥

अथ एकविंशतिस्नानानि ॥ पयोदधिघृतक्षौद्रलाजासिद्धार्थकास्तिलाः। यवव्रीहिकुशादूर्वामृद्भस्मफलशर्कराः। पञ्चामृतं पञ्चगव्यं कर्पूरौषधयस्तथा। एकविंशतिस्नानानि गन्धाद्यैः कुसुमैरऽपि॥ उदुत्तमं वरुण पाशमस्मदऽवाधमं विमध्यमं श्रथाय। अथा वयमाऽऽदित्यव्रते, तवानागसो अदितये स्याम॥ पयः पृथिव्यां पय ओषधीषु, पयो दिव्यऽन्तरिक्षे पयोधाः। पयस्वतीः, प्रदिशः सन्तु मह्यम् ॥१॥ दधिक्राव्णो०। घृतवती भुवनानामऽभिश्रियोर्वी पृथिवी मधुदुघे सुपेशसा। द्यावापृथिवी वरुणस्य धर्मणा, विष्कंभिते अजरे भूरिरेतसा ॥३॥ मधुवाता ऋतायते, मधु क्षरन्ति सिन्धवः, माध्वीर्नः सन्त्वोषधीः। मधु नक्तमुतोषसो, मधुमत्पार्थिवं रजः, मधु द्यौरऽस्तु नः पिता। मधुमान्नो वनस्पतिः मधुमानऽस्तु सूर्यः, माध्वीर्गावो भवन्तु नः॥ ९॥ तदस्य रूपममृतं शचीभि, स्तिस्रो दधुर्देवताः संरराणाः। लोमानि शष्पैर्बहुधान तोक्मभिः त्वगऽस्य मांसमभवन्न लाजाः॥ ५॥ रक्षोहणं वाजिनमाजिघर्मि, मित्रं प्रथिष्ठमुपयामि शर्म। शिशानो अग्निः क्रतुभिः समिद्धः, सनो दिवः सरिषः पातु नक्तम्॥ ६॥ तिलोऽसि सोमदैवत्यो, गोसवो देवनिर्मितः। प्रयत्नवद्भिः पितृंल्लोका,न्प्राण आयाहि नःस्वधा॥ ७॥ यवोऽसि यवयास्मद्द्वेषो यावया रातिम्। पितृषदनन्त्वा लोकमाऽऽस्तृणामि॥ ८॥ धान्यमऽसि धिनुहि,

देवान्धिनुहि, यज्ञन्धिनुहि, यज्ञपतिन्धिनुहिमां यज्ञम् ॥ ९ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाऽऽदधे ॥ १० ॥ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु, सहस्रेण शतेन च ॥ ११ ॥ आक्रम्य वाजिन्पृथिवी; मग्निमिच्छा रुचा त्वम् । भूम्यायत्वायनोब्रूहि, यतः खनेम ते वयम् ॥ १२ ॥ प्रसद्य भस्मना योनिमाऽपश्च पृथिवीमग्नेः । संसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनराऽऽसदः ॥ १३ ॥ याः फलिनीर्या अफला, अकोशाः कोशिनीश्च याः । बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वंहसः ॥ १४ ॥ शर्कराभिरऽवकामवकाभिः, शर्करामुत्सादेन । जिह्वामवक्रन्देन, तालुं सरस्वती जिह्वाग्रेण ॥ १५ ॥ पञ्चन्युष्टीऽऽनुपञ्चदुहागां, पञ्चनाम्नी मृतवोऽनु पञ्च । पञ्च दिशः पञ्चदशेन क्लृप्ताः, समानमूर्ध्नीरऽभिलोकमेकम् ॥ १६ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । मिश्रीकृत्य समुद्रादूर्मिर्मधुमां उदारदुपांशुनासमऽमृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानामऽमृतस्य नाभिम् ॥ १७ ॥ त्र्यम्बकं यजामहे सुगन्धिं रयिपोषणम् । उर्वारुकमिवबन्धनान्मृत्योर्मोक्षीय मा मृतात् ॥ १८ ॥ या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा । मनैनु बभ्रूणामऽहं शतं धामानि सप्त च ॥ १९ ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां, तामिहोपह्वये श्रियम् ॥ २० ॥ पुष्पवतीः प्रसुमतीः फलिनीरऽफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ २१ ॥ ऋतुपतये इत्यादिभ्यो एकविंशतिस्नानानि नमः ॐ अम्बुना पयसा दध्ना घृतेन मधुना यवैः । शर्करासर्षपतिलैस्तथा चामीकरेण वै । कर्पूरकुंकुमाभ्यां च, लाजाऽक्षोटैः सपुष्पकैः । सर्वौषध्यस्तथापश्चाद्विष्णोः स्नानानि षोडश । दद्यात्षोडश स्नानानि षोडशर्चेन विष्णवे । 'आदौ शुद्धजलेन' वसोः पवित्रमऽसि० ऋतुपतये० इत्यादिभ्याः शतधारोदकं नमः, सहस्रधारोदकं नमः ॥ ततः आनुष्टुभस्येति पुरुषसूक्तेन १६ । ओं रथे अक्षेषु वृषभस्य वाजे, वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान, सेयमागाद्वर्चसा संविदाना ॥ १ ॥ या हस्तिनि द्वीपिनि या हिरण्ये, गोष्वऽश्वेषु पुरुषेष्वऽन्तः । इन्द्रंया० ॥ २ ॥ सिंहे व्याघ्रे उत या पृदाकौ, त्विषिरग्नौ ब्रह्मणे सूर्ये या । इन्द्रं या देवी० ॥ ३ ॥ या राजन्ये दुन्दुभावायताया, मऽश्वस्य स्कन्दे पुरुषस्य मायौ । इन्द्रं० ४ इति लक्ष्मीसूक्तेन च तद्विष्णोः० ऋतुपतये इत्यादि षोडशस्नानानि नमः ॥ पानीयान्तरितैः पयोदधिघृतैः क्षौद्रेक्षुभिः सौषधैः । व्रीह्यद्भिः कुसुमोदकैः फलजलैः

सिद्धार्थलाजोदकैः ॥ गन्धाद्भिः शुभहेमरत्नसलिलैरित्थं सदा चोत्तमैः । दद्यात्पञ्चदशाम्बुना सह महास्नानानि शम्भोः क्रमात् ॥ उद्धुत्तमं १ पयः पृथिव्याः २ दधिक्राव्णो ३ घृतवती ४ मधुवाता ५ स्वादुः पव स्वदिव्याय जन्मने, स्वादुरिन्द्राय सुहवीतनाम्ने स्वादुर्मित्राय वरुणाय वायवे, बृहस्पतये मधुमां अदाभ्यः ॥६॥ या ओषधयः ७ धान्यमसि ८ पुष्पवतीः ९ याः फलिनीः १० रक्षोहणं ११ तदस्य रूपं १२ गन्धद्वारां १३ हिरण्यवर्णाः १४ ऋतं चसत्यं १५ पृ० ७ ॥ असंख्याताः सहस्राणि, ये रुद्रा अधिभूम्याम् । तेषां सहस्रयोजनेव धन्वानि तन्मसि १ येऽस्मिन्महत्यऽर्णवे,ऽन्तरिक्षे भवा अधि । तेषां ॥ २ ॥ ये नीलग्रीवाः शितिकण्ठा, दिवं रुद्रा उपाश्रिताः ॥ तेषां० ३ । ये नीलग्रीवाः शितकण्ठाः, शर्वा अधः क्षमाचराः ॥ ते० ४ ॥ ये वनेषु शिल्पिञ्जरा नीलग्रीवा विलोहिताः ॥ ते० ५ ॥ येऽन्नेषु विविध्यन्ति, पात्रेषु पिबतो जनान् । ते० ॥ ६ ॥ ये भूतानामधिपतयो, विशिखासः कपर्दिनः । ते० ॥ ७ ॥ ये पथीनां पथि रक्षय ऐडमृदाय व्युधः । ते० ॥ ८ ॥ ये तीर्थानि प्रचरन्ति, सृकावन्तो निषङ्गिणः । ते० ॥ ९ ॥ य एतावन्तो वा भूयांसो, वा दिशो रुद्रा वितिष्ठिरे । ते० ॥ १० ॥ ॐ नमो अस्तु रुद्रेभ्यो, ये दिवि येषां वर्षमिषवस्तेभ्यो, दश प्राचीर्दश दक्षिणा, दश प्रतीचीर्दशोदीचीर्दशोर्ध्वा, स्तेभ्यो नमो अस्तु, ते नो मृडयन्तु, ते यं द्विष्मो, यश्च नो द्वेष्टि, तमेषां जम्भे दधामि ॥ १ ॥ ॐ नमो अस्तु रुद्रेभ्यो, ये अन्तरिक्षे, येषां वात इषव,स्तेभ्यो, दशप्राची० ॥ २ ॥ ॐ नमो अस्तु रुद्रेभ्यो, ये पृथिव्यां, येषामऽन्नमिषवस्तेभ्यो० ॥ ३ ॥ यो रुद्रो अग्नौ यो अप्सु, य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश, तस्मै रुद्राय नमो अस्तु देवाः । भगवते भवाय देवाय । इत्यादि पञ्चदशस्नानानि नमः । ॐ गणानान्त्वा गणपतिं हवामहे, कविङ्कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत, आनः श्रृण्वन्नूतिभिः सीद सादनम् । भगवते विनायकाय इत्यादि चतुर्दशस्नानानि नमः । पयः क्षीरं दधि सर्पिरिक्षुस्तिला यवा मधु । लाजामृतं पञ्चगव्यं गन्धपुष्पौषधीस्तथा । त्रयोदशस्नानेऽमूनि सूर्यस्योक्तानि सूरिभिः । उद्वयन्तमसस्परि०षड् ऋग्भिः पृ० ७ पं० २१ ह्रांह्रींसः सूर्याय इत्यादि त्रयोदशस्नानानि नमः । लाजागन्धवाचः कुष्टं वालुकं शङ्खपुष्पकम् । कुङ्कुमागुरुकर्पूरं स्नाने देव्याः प्रकल्पयेत् ॥ अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहम्मित्रावरुणोभाविभर्म्यऽहमिन्द्राग्नी अहमश्विनोभा । दधि क्राष्णो० । आपो

हिष्ठा० । ॐ भूर्भुवः स्वस्त० । जातवेदसे सुनवाम सोम, मऽराती यतो निदहाति वेदः । स नःपर्षदऽतिदुर्गाणि विश्वा, नावेव सिन्धुं दुरितात्यग्निः । भगवत्यै अमायै इत्यादि अष्टौ स्थानानि नमः । अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः, तमीमहे महागयम् । पाञ्चजन्याय शङ्खाय स्नानं नमः । कयानश्चित्र आभूव, दूती सदा वृधः सखा, कया शचिष्ठया वृता । देवदूत्यै घण्टाभगवत्यै स्नानं नमः ॥ ततो ब्रह्मादयः सर्वे देवास्तृप्यन्तु० इत्यादि देवर्षिपितृतर्पणं ।

सव्येन–विष्णुपीठे भद्रपीठे य इदं तर्पणं पठेत् । धनं कीर्तिर्यशश्चैव नित्यं च सुखमश्नुते । बह्वायुश्च बहून्पुत्रान्यजमानो लभेत्सदा । वपुः पूतं पवित्रं च नित्यं गोदानकं फलम् । मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः । सौम्या भवन्तु तृप्ताश्च भूताः प्रेताः सुखावहाः । ॐ नमो देवेभ्यः "इत्यादि" । शुद्धजलेन तद्विष्णोः० भगवते वा० इत्यादिभ्यो मन्त्रगुडकं नमः ॥ ॐ प्रत्यग्ने हरसाहरः श्रृणीहि विश्वतः प्रति । यातुधानस्य रक्षसो बलं विरुज वीर्यम् ॥ इत्याऽऽरात्रिका । ता वां वास्तून्युश्मसि गमध्यै, यत्र गावो भूरिश्रृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः, परमं पदमऽवभाति भूरि । इति नेत्रस्पर्शनम् । उदकं चन्दनं चक्रं शङ्खश्च तुलसी-दलम् । घंटा शिला ताम्रपत्रमऽष्टाङ्गं चरणामृतम् । ॐ तद्विष्णोः० । भगवते वासु० 'इत्यादि चरणामृतं गृह्णामि नमः, ॥ आपो हि ष्ठा, इति शिरसि मार्जयेत्, आसनाय नमः, पद्मासनाय नमः, गरुडासनाय नमः, शतदलपद्मास०, । सहस्रदलप०, वृषभास०, मूषका०, सप्ताश्वासना०, सिंहासनाय नमः ॥ उत्तिष्ठ भगवन्विष्णो उत्तिष्ठ कमलापते ! । उत्तिष्ठ त्रिजगन्नाथ ! त्रैलोक्ये मंगलं कुरु ॥ 'मुकुन्दमालां पठित्वा । 'रथे अक्षेषु० ऋ ४ ॐभगवते वासुदेवाय इत्यादिभ्योऽ-नुलेपनं गृह्णामि नमः । तं यज्ञं० युवा सुवासाः० ऋतुपतये० 'इत्यादिभ्यो वस्त्रं नमः' । तस्माद्यज्ञात्सर्वहुतः संभृतं०, यज्ञोपवीतं० ऋतु० 'यज्ञोपवीतं वासोनमः' । तस्माद्यज्ञात्सर्वहुतः ऋचः०, गन्धद्वारां० ऋतुप० 'समालभनं गन्धो नमः' ॥ तस्मादऽश्वा० पुष्पवतीः० ऋतु० 'अर्घो नमः । पुष्पं नमः' । ततः पुरुषसूक्तेन लक्ष्मीसूक्तेन च 'पूर्वे' नारायणाय नमः, 'दक्षिणे' पुण्डरीकाक्षाय०, 'पश्चिमे' गोविन्दाय, 'उत्तरे' मधुसूदनाय 'ऐशान्यां' विष्णवे 'आग्नेय्यां' जनार्दनाय 'नैर्ऋत्यां' पद्मनाभाय 'वायव्यां' वामनाय 'ऊर्ध्वे' वासुदेवाय 'अधरे' लोकनाथाय 'मध्ये' केशवाय, शङ्खाय, चक्राय, गदायै, हलाय, मुसुलाय,

कौस्तुभाय, जयाय, विजयाय, धात्र्यै, शेषाय, अयनद्वयाय, 'द्वारे' चण्डाय, उपचण्डाय, ऋग्वेदाय, यजुर्वे०, सामवे०, अथर्ववे०, कृतयुगाय, त्रेतायु०, द्वापरयु०, कलियु०, ॐ भूर्लोकाय, ॐ भुवोलो०, ॐ स्वर्लो० ॐ भूर्भुवःस्वर्लो०। तद्विष्णोः० ॥ २ ॥ वासुदेवाय 'इत्यादि' यो रुद्रो० भवाय देवाय 'इत्यादि'। गणानान्त्वा०। विनायकाय 'इत्यादि'। चित्रन्देवानां०। ह्रांह्रींसः सूर्याय 'इत्यादि'। जातवेदसे० अमायै 'इत्यादि' अर्घो नमः पुष्पं नमः' ॥ यत्पुरुषं० पृ० ८ धूरसि धूर्व धूर्वन्तं योऽस्मान्धूर्वति तं धूर्वय वयन्धूर्वामस्तं च धूर्व। देवानामसि वह्नितमं सस्नितमं पप्रितमं इष्टतमं देवतमं विष्णोः क्रमोस्याहुतमसि हविर्दानं दृंहस्व स्वाह्वान्मित्रस्य त्वा चक्षुषा प्रेक्ष उरुत्वावाताय। वसवस्त्वां धूपयन्तु गायत्रेण च्छन्दसाङ्गिरस्वत्। रुद्रास्त्वा धू०, त्रैष्टुभेन च्छ०, । आदित्यास्त्वा धू०, जागतेन च्छ०, विश्वेत्वा देवा वैश्वानरा धू०, आनुष्टुभेन च्छ० । इन्द्रस्त्वा धूपयतु। वरुणस्त्वा धू०। विष्णुस्त्वा धू० । ऋतुप० 'इत्यादिभ्यो धूपं परिकल्पयामि नमः' ॥ ब्राह्मणोऽस्य० । तेजोसि शुक्रमसि ज्योतिरसि धामासि । प्रियन्देवानामऽनाधृष्टन्देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि देवेभ्यस्त्वा यज्ञेभ्यो गृह्णामि ॥ ऋतु० 'इत्यादिभ्यो रत्नदीपं परिकल्पयामि नमः' देवस्य त्वा० जय नारायण० शिवयोर्लीलास्तुतिं पठित्वा ऋतुप० 'चामरं परिकल्प० नमः । काण्डात्काण्डा० 'छत्रं परि० । तच्चक्षु० 'आदर्शं परि०' । एताभ्यो देवताभ्यो 'धूपो नमः दीपो नमः'। एता० 'वासो नमः'। एतासां देवतानामर्घ्यदानाद्यऽर्चनविधिःसर्वः परिपूर्णोऽस्तु ॥ चन्द्रमामनसो० हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मैदेवाय हविषा विधेम । ऋतुप० विष्णुपंचायतन दे० 'मात्रामधुपर्कं चरुं निवेदयामि नमः' नाभ्या आसीत्० 'कुसुमांजलिं परिक०' । सप्तास्याऽसन्० ॐ नमो नारायणाय भगवन्प्रसीद, इति च चत्वारि प्रदक्षिणानि ॥ ध्येयं सदा परिभवघ्नमऽभीष्टदोहं तीर्थास्पदं शिवविरञ्चिनुतं शरण्यम् । भृत्यार्तिहं प्रणतपाल ! भवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम्। त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं, धर्मिष्ठ ! आर्यवचसा यदगादऽरण्यम्। मायामृगं दयितयेप्सितमेऽनुधावत् वन्दे० ॥ २ ॥ श्रीमत्सरोरुहयवांकुशचक्रचाप; मत्स्याङ्कितं नवविलोहितपल्लवाभम्। लक्ष्म्यालयं परममङ्गलमात्मरूपं वन्दे० ॥ ३ ॥ वृन्दावनान्तरमऽगादऽनु गोकुलानां सञ्चार्य सर्वपशुभिः

स्वविवृद्धिकामी । सञ्चिन्तयेदऽगगुरोर्मृगपक्षिणां यद्वन्दे० ॥ ९ ॥ यद्गोपिका विरह-जाग्निपरीतदेहास्तप्तस्तनेषु विजहुः परिरभ्य तापम् । रासे तदीयकुचकुंकुमपंकलिप्तं वन्दे० ॥ ५ ॥ कालीयमस्तकविघट्टनदक्षमऽस्य मोक्षेप्सुभिर्विरहदीनमुखाभिरारात् । तत्पत्निभिः स्तुतमऽशेषनिकामरूपं वन्दे० ॥ ६ ॥ ज्ञानालयं श्रुतिविमृग्यमऽनादि-मऽर्च्यं ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः । संसारकूपपतितोत्तरणावलम्बं वन्दे० ॥ ७ ॥ येनाङ्कपालवपुषः स्तनपानबुद्धेस्त्वदंऽघ्रिणा हृतमऽनो विपरीतचक्रम् । विध्व-स्तभाण्डमऽपतद्भुवि गोपमूर्तेर्वन्दे० ८ इत्यष्टकं पठति यः परमस्य पुंसो नारायणस्य निरयार्णवतारणस्य । सर्वाप्तिमाशु हृदये कुरुते मनुष्यैः संप्राप्य देहविलयं लभते च मोक्षम् ॥ ९ ॥ 'उभाभ्यां जानुभ्यां पाणिभ्यां शिरसा उरसा मनसा वचसा च नमस्कारं करोमि नमः' । अन्नं नमः २ आज्यं २ अद्यदिने अद्य यथा संकल्पा-त्सिद्धिरस्तु अन्नहीनं क्रियाहीनं विधिहीनं द्रव्यहीनं मन्त्रहीनं च यद्गतं तत्सर्व-मऽच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ शन्नो देवी० ऋतुपतये 'इत्यादिभ्यः अपोशानं नमः आचमनीयं नमः' ॥ पुनः शन्नो देवी० । ऋ० दक्षिणायै तिलहिरण्य-रजतनिष्कर्षं ददानि । एता देवताः सदक्षिणाऽन्नेन प्रीयंतां प्रीताः सन्तु ॥ अमृतेशमुद्रया अमृतीकृत्य० इत्यादि सर्वो नैवेद्यविधिः । तद्विष्णोः० इति पुष्पद्वयं क्षिपेत् ॥ ततो जपादि कृत्वा । ॐ भूः पुरुषं विसर्जयामि नमः ॐ भुवः पुरुषं विस०, ॐ स्वः पुरुषं वि०, ॐ भूर्भुवः स्वः पुरुषं विस०, । ॐ भूर्भुवः स्वस्तत्स० ३ । इत्यादि सर्वा गायत्रीः पठित्वा आत्मनो० श्रीविष्णुप्रीत्यर्थं विष्णुपञ्चाय-तनपूजनमच्छिद्रं सम्पूर्णमऽस्तु एवमस्तु । एताभ्यो देवताभ्यो यवोदकं नमः उदकतर्पणं नमः । आज्ञा मे दीयतां नाथ नैवेद्यस्याऽस्य भक्षणे । शरीरयात्रा-सिद्ध्यर्थं भगवन् क्षन्तुमऽर्हसि । आपन्नोस्मि शरण्योसि, सर्वावस्थासु सर्वदा । भगवंस्त्वां प्रपन्नोऽस्मि रक्ष मां शरणागतम् । एवं पञ्चानां देवानां स्तोत्रपाठादि पठित्वा ॥ आह्वानं नैव जानामि नैव जानामि पूजनम् । पूजाभागं न जानामि क्षम्यतां परमेश्वर । उभाभ्यां जानुभ्यां इत्यादि नमस्कारं करोमि नमः । नमो ब्रह्मणे ३ इति तर्पणम्' यज्ञेन यज्ञं 'इति विसर्जनम्' ॥ बलिर्विभीषणो भीष्मः प्रह्लादो नारदः शुकः । षडेते वैष्णवश्रेष्ठा गृह्णन्तु चरणोदकम् । ॐ नमो देवेभ्यः० इत्यादि' ॥ पूजितोसि मया भक्त्या भगवन्कमलापते । सलक्ष्मीको मम स्वान्तं

विश विश्रान्तिहेतवे । इति विज्ञप्य, चरणाऽमृतं पिबेत् चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूतः, अतिपाप्मानमऽरातिंतराम । लोकस्य द्वारमर्चिष्मज्ज्योतिष्मत्, लोकस्य धारां बहुधा दोहमानं, चरणं नृलोके सततं ददातु । देवदेव महादेव शंखचक्रगदाधर । देहि विष्णो ममानुज्ञां पादोदकनिषेवणे ॥ १ ॥ अकालमृत्युहरणं सर्वव्याधिनिवारणम् । श्रीविष्णुपादोदकं पीत्वा पुनर्जन्म न विद्यते ॥

इति विष्णुपंचायतनपूजाविधिः ॥

---

## अथ पंचगव्यविधिः ॥

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
निर्दिष्टं पञ्चगव्यं च पवित्रं कायशोधनम् ॥ १ ॥
गायत्र्याऽऽदाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधि क्राव्णेति वै दधि ॥ २ ॥
तेजोसीति घृतं प्रोक्तं देवस्यत्वा कुशोदकम् ।
गोमूत्रं गोमये क्षेप्यं ते संक्षिप्ये घृते तथा ॥ ३ ॥
तानि दध्नि प्रक्षिप्यानि तत्सर्वं पयसोन्तरे ।
एकीकृत्य तु तत्सर्वं कुशोदकविमध्यगम् ॥ ४ ॥
आपो हिष्ठेति चाऽलोड्य प्रणवेन तु तत्पिबेत् ।
औदुम्बरे पद्मपत्रे रौप्यपात्रे हिरण्मये ॥ ५ ॥
मंत्रपूतं पिबेत्तत्तु त्रीन्वारान्पञ्चगव्यकम् ।
शुद्धवतीति मन्त्रेण प्रक्षिपेद्दिक्षु सर्वतः ॥ ६ ॥
पलमात्रं दुग्धभागं गोमूत्रं तावदिष्यते ।
घृतं च पलमात्रं स्याद्गोमयं तोलकद्वयम् ॥ ७ ॥
दधि प्रसृतमात्रं स्यात्पञ्चगव्यं त्विदं स्मृतम् ।
अथवा पञ्चगव्यानां समानो भाग इष्यते ॥ ८ ॥
मूलमंत्रेण संमंत्र्य कुशाग्रेणैव शोधयेत् ।
तेन सर्वविशुद्धिः स्यात्सर्वपापनिकृतनम् ॥ ९ ॥

गोमूत्रं ताम्रवर्णायाः शुद्धवत्यास्तु गोमयम् ।
पयः काञ्चनवर्णाया नीलायाश्च तथा दधि ॥ १० ॥
घृतं च कृष्णवर्णायाः सर्वं कापिलमेव वा ।
गोमूत्रं माषकास्त्वष्टौ गोमयस्य तु षोडश ॥ ११ ॥
पयसो द्वादश प्रोक्ता दध्नः पञ्चदश स्मृताः ।
घृतस्याऽष्टादश प्रोक्ताः प्रमाणं पंचगव्यके ॥ १२ ॥
एकोनविंशमाषास्तु कुशोदकस्य च स्मृताः ।
गोमूत्रमुत्तरे स्थाप्यं गोमयं वारुणे न्यसेत् ॥ १३ ॥
सर्पिर्याम्यां दधि प्राच्यां क्षीरं मध्ये तु निक्षिपेत् ।
कुशोदकं तथैशान्यां पंचगव्यस्थितेर्विधिः ॥ १४ ॥
वरुणो देवता मूत्रे गोमये हव्यवाहनः ।
विष्णुः क्षीरे दध्नि सोमो घृतस्य पितृमांस्तथा ॥ १५ ॥
कुशोदके भवेद्ब्रह्मा पञ्चगव्यस्य देवताः ।
मातृघ्नं भ्रूणहन्तारं गुरुतल्पगमेव वा ॥ १६ ॥
पञ्चगव्यं सकृत्पीतं पापेभ्यो विनिवर्तयेत् इति ॥

## अथ दिक्क्षेपणमंत्राः ॥

एतोन्विन्द्रं स्तवामहेऽहं शुद्धः शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वा संशुद्ध आशीर्वान्ममम ॥
तुतान्धुवाम यङ्गिर इन्द्र मुक्ता न वावृधः ।
पुरूण्यऽस्य पांस्यामिषासन्तो हवामहे ॥
इन्द्र शुद्धो हतो नहि शुद्धः शुद्धाभिरूतिभिः ।
शुद्धो रयिं निधारय शुद्धः समद्धि सौम्यः ॥
इन्द्रः शुद्धो हि नोरयिं शुद्धो रत्नानि दाशुषे ।
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजो सिषामहि ॥
पञ्चव्युष्टीरनु० पृ० २१ पं० ८ इति पञ्चगव्यविधिः ॥

---

# भोजनविधिः ।

अथ भोजनविधिः ॥ तत्रादौ लेपनं विधाय.

चतुष्कोणं तु विप्रस्य क्षत्रियस्य त्रिकोणकम् ।
मण्डलाऽऽकृति वैश्यस्य, शूद्रस्याऽभ्युक्षणं स्मृतम् ॥ १ ॥
अकृत्वा मण्डलं ये तु, भुञ्जतेऽन्नमऽधोमुखाः ।
तेषां तु यक्षरक्षांसि, भुञ्जतेऽन्नस्य तद्बलम् ॥ २ ॥
पञ्चाऽर्द्रो भोजनं कुर्या,द्वाग्युतः प्राङ्मुखः शुचिः ।
हस्तौ पादौ तथा वक्त्रमेषा पञ्चाऽर्द्रता मता ॥ ३ ॥

ततोऽन्नपात्रमाऽऽनीय । अन्नं दृष्ट्वा प्रणम्याऽऽदौ, प्राञ्जलिः कथयेदिदम् ।
अस्माकं नित्यमऽस्त्वेतदिति स्मृत्वा च वन्दयेत् ॥ ४ ॥

अमृतमुद्रयाऽन्नपात्रं गृहीत्वा । अन्नपते अन्नस्य नो देह्यऽनमीवस्य शुष्मिणः ।
प्र प्रदातारं तारिषं, ऊर्जं नो देहि द्विपदे शं चतुष्पदे ॥ ५ ॥

गायत्र्या चाऽभिमंत्र्य ॥ ६ ॥ ततो जलेनाऽभ्युक्ष्य । ॐउच्छिष्टोच्छिष्टोपहतं, यच्च पापेन हतं मृतसूतकाद्वा । वसोः पवित्रमऽग्निः सवितुश्च रश्मयः पुनन्त्वऽन्नं मम दुष्कृतं यच्चाऽन्यत् ॥ ७ ॥ ॐतद्विष्णोः परमं० ॥ ८ ॥ इति च । ततो दक्षिणभागे भूमौ । ॐभूपतयेनमः, ॐभुवनपतये नमः, ॐभूतानां पतये नमः, । इति बलित्रयं निवेद्य । ये केचिद्यत्र तत्रस्थाः, प्रेतभागवशाऽनुगाः । इहैव भूमौ ते सर्वे, मद्दत्तलेपमऽश्नताम् ॥ ९ ॥ इति लेपं भूमौ प्रक्षाल्य अन्तश्चरसि भूतेषु "इति" ब्रह्मार्पणं ब्रह्महविर्ब्रह्माऽग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं, ब्रह्मकर्मसमाधिना ॥ ११ ॥ ओं अमृतोपस्तरणमऽसिस्वाहा इत्याऽऽचम्य ॥ 'प्राणायस्वाहा' इति तर्जनीमध्यमाभ्यां, । 'अपानाय स्वाहा' इति मध्यमाऽनामिकाङ्गुष्ठैः । 'समानाय स्वाहा' इति कनिष्ठाऽनामिकाऽङ्गुष्ठैः 'उदानाय स्वाहा' इति तर्जनींविनाऽङ्गुलिभिः ॥ 'व्यानाय स्वाहा' इति सर्वाङ्गुलिभिर्दत्तामाऽहुतिं जिह्वयैवाऽत्वा । शेषमिष्टदेवतामंत्रमंत्रितं प्रत्येकं ग्रासं ग्रसित्वा । गण्डूषैर्मुखं विशोध्य । ॐअमृतापिधानमसि स्वाहा' इत्याऽऽचम्य ॥

ये कांक्षणमाना जीवा वै, ये च कर्मवशाऽनुगाः ।
भुञ्जतां ते ममोच्छिष्टं पात्रशेषं समर्पितं ॥१२॥ इत्यभिमंत्र्य शेषान्नं भूमौ निर्वपेत् ॥

दक्षिणकराङ्गुष्ठेन दक्षिणपादाङ्गुष्ठं ।

'अङ्गुष्ठमात्रः पुरुषः सोऽङ्गुष्ठाग्रमुपाश्रितः ।
ईशः सर्वस्य जगतः, प्रभुः प्रीणातु विश्वभुक् ॥ १३ ॥ इति निप्लावयित्वा ।
शर्यातिश्च सुकन्या च, शक्रश्च च्यवनोऽश्विनौ ।
षडेते गारुडीं दृष्टिं, मह्यं ददतु सर्वदा ॥१४॥ इति नेत्रयोरङ्गुष्ठेनोदकं संस्पृश्य ।
इष्टदेवतां स्मरन् । प्राणोऽग्निः परमात्मा वै, पञ्चवायुसमाश्रितः ।
स प्रीतः प्रीणातु विश्वं विश्वभुक् ॥ १५ ॥
विश्वोऽसि वैश्वानरोऽसि, विश्वमाऽऽभाससे जायमानः ।
विशन्ति त्वांमाऽऽहुतयश्च सर्वाः, प्रजास्तत्र यत्र विश्वाऽमृतोसि ॥ १६ ॥
अहं वैश्वानरो भूत्वा, प्राणिनां देहमाऽऽश्रितः ।
प्राणाऽपानसमायुक्तः, पचाम्यऽन्नं चतुर्विधम् ॥ १७ ॥
अहमऽन्न,-मह-मन्नदः, अह-मन्नादः ॥
अगस्त्यः कुम्भकर्णश्च, भीमश्च वडवानलः ।
भोजनान्ते स्मरेन्नित्यं, कुक्षौ रोगो न जायते ॥ १९ ॥
राज्ञां शिवं चाऽस्तु तथा द्विजानां, गवां शिवं चाऽस्तु तथा प्रजानाम् ॥
आतङ्कहीनं जगदऽस्तु सर्वं, दोषा विनाशं सकलाः प्रयान्तु ॥ २० ॥ इति पठेत् ॥

इति भोजनविधिः ॥



## अथ गुरुस्तुतिः

ॐब्रह्माऽऽनन्दं, परमसुखदं, केवलं ज्ञानमूर्तिं
द्वन्द्वातीतं गगनसदृशं, तत्त्वमऽस्याऽऽदिलक्ष्यम् ।
एकं नित्यं विमलमऽचलं, सर्वधीसाक्षिभूतं
भावाऽतीतं त्रिगुणरहितं, सद्गुरुं तं नमामि ॥ १ ॥
स्मारं स्मारं जनिमृतिभयं, जातनिर्वेदवृत्ति-
र्ध्यायं ध्यायं पशुपतिमुमाकान्तमऽन्तर्निषण्णम् ।
पायं पायं सपदि परमानन्दपीयूषधारा
भूयो भूयो निजगुरुपदाऽम्भोजयुग्मं नमामि ॥ २ ॥

यस्य देवे परा भक्ति, र्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः, प्रकाश्यन्ते महात्मनः ॥ ३ ॥
नमामि सद्गुरुं शान्तं, प्रत्यक्षं शिवरूपिणम् ।
शिरसा योगपीठस्थं, धर्मकामार्थसिद्धये ॥ ४ ॥
श्रीगुरुं परमानन्दं, वन्दे आनन्दविग्रहम् ।
यस्य सान्निध्यमात्रेण, चिदाऽऽनन्दायते परम् ॥ ५ ॥
अखण्डमण्डलाकारं, व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन, तस्मै श्रीगुरवे नमः ॥ ६ ॥
अज्ञानतिमिरान्धस्य, ज्ञानाऽञ्जनशलाकया ।
चक्षुरुन्मूलितं येन, तस्मै श्रीगुरवे नमः ॥ ७ ॥
हरौ रुष्टे गुरुस्त्राता, गुरौ रुष्टे न कश्चन ।
सर्वदेवस्वरूपाय, तस्मै श्रीगुरवे नमः ॥ ८ ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षान्महेश्वरः ।
गुरुरेव जगत्सर्वं, तस्मै श्रीगुरवे नमः ॥ ९ ॥
ध्यानमूलं गुरोर्मूर्तिः, पूजामूलं गुरोः पदम् ।
ज्ञानमूलं गुरोर्वाक्यं, मोक्षमूलं गुरोः कृपा ॥ १० ॥
नमस्ते नाथ भगवन्, शिवाय गुरुरूपिणे ।
विद्यावतारसंसिद्ध्यै, स्वीकृताऽनेकविग्रह ॥ ११ ॥
नवाय नवरूपाय, परमार्थैकरूपिणे ।
सर्वाऽज्ञानतमोभेदभानवे चिद्घनाय ते ॥ १२ ॥
स्वतन्त्राय दयाक्लृप्तविग्रहाय परात्मने ।
परतन्त्राय भक्तानां, भव्यानां भव्यहेतवे ॥ १३ ॥
ज्ञानिनां ज्ञानरूपाय, प्रकाशाय प्रकाशिनाम् ।
विवेकिनां विवेकाय, विमर्शाय विमर्शिनाम् ॥ १४ ॥
पुरस्तात्पार्श्वयोः पृष्ठे, नमस्कुर्यामुपर्यऽधः ।
सदा मच्चित्तरूपेण, विधेहि भवदाऽऽसनम् ॥ १५ ॥

इति श्रीगुरुस्तुतिः ।

## अथ महागायत्रीस्तुतिः ।

सदा गवेषयन् जगत्त्रयेषु वेदमातरं
चिदाऽऽत्मना कृतस्थितिं, समत्र चाऽद्य लब्धवान् ।
उदऽस्तु गद्गदं महोदयात्प्रणौमि भक्तिनौ-
कया सुदुस्तरं द्रुतं, तितीर्षुराऽऽपदऽर्णवम् ॥ १ ॥
सुदीनलोकपातिनी, सतां कृपाऽतिशोभते
ह्यऽतः सुधांशुचक्षुषे,-क्षयाऽम्ब ! मादृशं जनम् ।
नवाऽपि हीयते तवे,-षदीशि ! पालनेन नो
भवात् यतः कुपुत्रता, न भासते प्रसूहृदि ॥ २ ॥
नमामि मुक्तविद्रुम,-प्रतप्तहाटकाऽसिताऽ-
वदातवर्णसुन्दरैः, षडऽर्धलोललोचनैः ।
सरोजषण्डबान्धव,-प्रतप्तहाटकप्रभैः
किरीटरत्नरंजितैः, सुधांशुखण्डमंडितैः ॥ ३ ॥
मुखैर्दशार्धसंमितै,-र्विराजमानविग्रहां
सुरेशचापसप्रभां, समस्तदेववन्दिताम् ।
वराऽभयाऽङ्कुशाऽन्वितैः, कपालशूलशङ्खच-
क्रसारसद्वयीगुणा,-ऽङ्कितैः करैर्विराजिताम् ॥ ४ ॥
भवद्रुमस्य मूलतां, गतां मुनीन्द्रवन्दिता-
मऽखण्डभावमण्डल,-प्रकाशकारिणीं शिवाम् ।
समस्तदेवतामयीं, समस्तसिद्धिदायिनी-
मऽपूर्वरूपविग्रहां, सरस्वतीं भवार्तिहाम् ॥ ५ ॥
शुचीन्दुसूर्यलोचनां, शुचीन्दुसूर्यविग्रहां
शुचीन्दुसूर्यसङ्गम,-स्वभावशालिनीं शुभाम् ।
पदद्वयाऽनुकम्पित,-स्वशक्तिचक्रसेवितां
परेशशक्तिमुत्तमां, भजे त्रिलोकसुन्दरीम् ॥ ६ ॥
महामहेश्वरी जगद्वि,-सर्गसुस्थितिक्षय-
स्वतन्त्रता शरीरिणी, बभूव या महेशितुः ।

द्विपत्रिताऽदिभेदतो, लतायमानविग्रहा
त्रयीश्वरी सदा तु सा, जगज्जयाय जायताम् ॥ ७ ॥
नमामि तन्मुखाऽरविन्दपङ्कजं मलाऽपहं
गलैकनालकं सदाविकासि भक्तिसम्भवम् ।
स्वभक्तहंससेवितं, शुचीन्दुपद्मबन्धवः
प्रतीकभूतविग्रहा, गता हि यत्र पञ्चताम् ॥ ८ ॥
भवाऽर्णवेऽतिदुःसह,-स्मराऽधिदिग्धमानसं
षडूर्मिनित्यपीडितं, जनं दिधीर्षुमानसा ।
श्रुतिध्वनिस्फुरन्मुखा,-ऽरविन्दभूसुरैः सदा
त्रिसन्ध्यमीश्वरी नुता,-ऽस्तु सा सुखप्रदा हि नः ॥ ९ ॥
त्रयीप्रसूः स्वदृष्टिपा,-तधूतभक्तिकल्मषा
समैर्जनैर्नुता मुदा, स्ववर्णधर्मभेदतः ।
निलिम्पनिम्नगामिषे,-ण पादधौतजं जलं
यदीयमाऽऽगतं क्षितिं, तनोतु नः शिवं तु सा ॥ १० ॥
स्वदम्भवञ्चिताऽखिलं, कुभोगसक्तमानसं
सदाशुचिं कुमार्गगं, शठं च शंकसे यदि ।
कथं स्वपादचिन्तनो,-त्थवैभवं नहीश्वरि !
यतोऽङ्घ्रिचिन्तकं दया,-दृशोक्षसे न मादृशम् ॥ ११ ॥
अनेकदोषदूषिते,-ष्वऽनिर्विवेचना सती
स्वतन्त्रशक्तिरीश्वरी, भवाघनाशकारिणी ।
कृपामयीं दृशं विधाय सा स्वभक्तिपात्रितं
स्वपत्कजे मधुव्रतं, करोतु मामऽहर्निशम् ॥ १२ ॥
त्रिसन्ध्यमिष्टदैवतं, सुकेशवास्यजं स्तवं
स्मरन् हृदीद्धभावनो, विधाय वेदमातरम् ।
विधूय पापसञ्चयं, वितीर्य कीर्तिमुत्तमा-
मिहत्वऽमुत्र कैवलं, पदं स याति निर्भयम् ॥ १३ ॥

इति श्रीमहागायत्रीलीलास्तुतिः ।

## प्रार्थनास्तुतिः ॥

ॐदुर्निवारभवध्वान्त,ध्वंसनैककृतेक्षणाम् ।
नौमि मोहविनाशाय, भीतो ब्रह्मादिदैवताम् ॥ १ ॥
दुर्गतिं हर मे देवि, बहुजन्मशतार्जिताम् ।
प्राप्य कल्पतरुच्छायां, कथं सन्तप्यते जनैः ॥ २ ॥
पश्य मामाऽऽशु गायत्रि, बिभ्यतं स्निग्धचक्षुषा ।
न बालमऽबलं पुत्रं, मुञ्चत्यऽग्रगमम्बिका ॥ ३ ॥
एहि मां पाणिपद्मेन, देहि तूर्णं वरं शुभम् ।
महामोहाऽऽकुलं दीनमेहि मां स्पृश नित्यशः ॥ ४ ॥
मातः प्रतीक्षते नाऽर्तो, यत्तदाऽऽशु प्रसीद मे ।
हित्वाऽक्षसूत्रं सावित्रि, निर्विघ्नं पश्य मामिह ॥ ५ ॥
शृण्वतो नाऽन्यकृत्यं स्यात्तत्त्वं परहितं कुरु ।
ब्रह्मविष्णुहराद्यास्त्वामाऽऽश्रयन्ति सुरेश्वरि ॥ ६ ॥ इति प्रार्थनास्तुतिः



## अथ सरस्वतीस्तुतिः ॥

ॐसितवर्णाऽलङ्कारे,! सरस्वति ! समस्तवाङ्मयाऽऽधारे !
कमलजमानसवरले!, मृगाङ्कधवले! नमस्तुभ्यम् ॥ १ ॥
धन्यः स एव लोके, स एव पूज्यः स एव सर्वगुरुः ।
यस्य मुखकमलकोशे, वाङ्मयि कुलदेवते! वससि ॥ २ ॥
कस्त्वां विना विवेकी विवेकविकलस्य निष्फलं जन्म ।
तस्माद्धारति भविनां, त्वमेव हेतुर्विवेकेऽपि ॥ ३ ॥
लक्ष्मीवानऽपि पुरुषः, शूरः सुभगोऽपि कामसमरूपः ।
वृष इव विबुधसभायां, प्रतिभात्यऽमले! त्वया रहितः ॥ ४ ॥
मुनिमनुजमाननीयो, मात! मूर्खोऽपि मानवो दक्षः ।
निश्शेषशास्त्रवक्ता, त्वन्मंत्रध्यानतो भवति ॥ ५ ॥
कुवलयदृशः क्व ताव,द्वेश्मनि विलसन्ति कुचभराऽऽनम्राः ।
यावदऽसिताऽब्जनयने! न त्वं तुष्टासि देवि भुवि भविनाम् ॥ ६ ॥

जित्वा नरोऽरिराजक,मऽगगुरुगजवाजिपुरुषबलसहितः ।
यदुपैति तत्समग्रं, त्वच्चरणनुतेः फलं तस्य ॥ ७ ॥
आवर्जिताऽपि कष्टैरिह जन्मनि मुञ्चति नरं श्रीः ।
न त्वं सत्प्रभवेष्विति मत्वा को नौति नो भवतीम् ॥ ८ ॥
कविवरवदनसरोरुह,विहरणविस्रम्भविभ्रमभ्रमरि !
भगवति ! पञ्चमुखीश्वरि ! वागीश्वरि ! नमस्तेऽस्तु ॥ ९ ॥
शम्भुप्रणतां वाणीं, भक्त्या यःस्तौति सोऽचिरेणैव ।
अवहितबुद्धिप्रसरो, कविराजो जायते मनुजः ॥ १० ॥

इति कालिदासकृता सरस्वतीस्तुतिः ।

---

## अथ गौरीस्तुतिः ॥

ॐ लीलाऽऽरब्धस्थापितलुप्ताऽखिललोकां, लोकाऽतीतैर्योगिभिरन्तर्हृदिमृग्याम् ।
बालाऽऽदित्यश्रेणिसमानद्युतिपुंजां, गौरीमऽम्बामऽम्बुरुहाक्षीमऽहमीडे ॥ १ ॥
आशापाशक्लेशविनाशं विदधानां, पादाऽम्भोजध्यानपराणां पुरुषाणाम् ।
ईशीमीशाङ्गाऽर्धहरां तां तनुमध्यां, गौरीमऽम्बामऽम्बुरुहाक्षी० ॥ २ ॥
प्रत्याहारध्यानसमाधिस्थितिभाजां, नित्यं चित्ते निर्वृतिकाष्ठां कलयन्तीम् ।
सत्यज्ञानाऽऽनन्दमयीं तां तडिदाऽऽभां, गौरीमऽम्बामऽम्बुरुहाक्षी० ॥ ३ ॥
चन्द्राऽऽपीडाऽऽनन्दितमन्दस्मितवक्त्रां,चन्द्राऽऽपीडाऽलङ्कृतलोलाऽलकभाराम्
इन्द्रोपेन्द्राद्यऽर्चितपादाऽम्बुजयुग्मां, गौरीमऽम्बामऽम्बुरुहाक्षी० ॥ ४ ॥
नानाकारैः शक्तिकदम्बैर्भुवनानि, व्याप्य स्वैरं क्रीडति याऽसौ स्वयमेका ।
कल्याणीं तां कल्पलतामाऽनतिभाजां, गौरीमऽम्बामऽम्बुरुहाक्षी० ॥ ५ ॥
मूलाधारादुत्थितवन्तीं विधिरन्ध्रं, सौरं चान्द्रं धाम विहाय ज्वलिताङ्गीम् ।
स्थूलां सूक्ष्मां सूक्ष्मतरां तामऽभिवन्द्यां, गौरीमऽम्बामम्बुरुहाक्षी० ॥ ६ ॥
आदिक्षान्तामऽक्षरमूर्त्या विलसन्तीं, भूते भूते भूतकदम्बं प्रसवित्रीम् ।
शब्दब्रह्माऽऽनन्दमयीं तामऽभिरामां, गौरीमऽम्बामम्बुरुहाक्षी० ॥ ७ ॥
यस्याः कुक्षौ लीनमऽखण्डं जगदऽण्डं, भूयो भूयः प्रादुरभूदऽक्षतमेव ।
भर्त्रा सार्धं तां स्फटिकाद्रौ विहरन्तीं, गौरीमऽम्बामम्बुरुहाक्षी० ॥ ८ ॥

यस्यामेतत्प्रोतमऽशेषं मणिमाला, सूत्रे यद्वत्क्काऽपि चरं चाऽप्यऽचरं च ।
तामऽध्यात्मज्ञानपदव्या गमनीयां, गौरीमऽम्बामऽम्बुरुहाक्षी० ॥ ९ ॥
नित्यः सत्यो निष्कल एको जगदीशः, साक्षी यस्याः सर्गविधौ संहरणे च ।
विश्वत्राणक्रीडनशीलां शिवपत्नीं, गौरीमऽम्बामऽम्बुरुहाक्षी० ॥ १० ॥
प्रातःकाले भावविशुद्धिं विदधानो, भक्त्या नित्यं जल्पति गौरीदशकं यः ।
वाचां सिद्धिं सम्पदमुच्चैः शिवभक्तिं, तस्याऽवश्यं पर्वतपुत्री विदधाति ॥११॥

"इति श्रीगौरीस्तुतिः सम्पूर्णा ॥"



## अथ मुकुन्दमालास्तुतिः ॥

ॐवन्दे मुकुन्दमऽरविन्ददलाऽऽयताऽक्षं, कुन्देन्दुशङ्खदशनं शिशुगोपवेशम् ।
इन्द्रादिदेवगणवन्दितपादपीठं, वृन्दावनाऽऽलयमऽहं वसुदेवसूनुम् ॥ १ ॥
श्रीवल्लभेति वरदेति दयापरेति, भक्तप्रियेति भवलुण्ठनकोविदेति ।
नाथेति नागशयनेति जगन्निवासे, त्वाऽऽलापिनं प्रतिदिनं कुरु मां मुकुन्द ॥२॥
जयतु जयतु देवो, देवकीनन्दनोऽयं, जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।
जयतु जयतु मेघश्यामलः कोमलाङ्गो, जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥३॥
मुकुन्द मूर्ध्ना प्रणिपत्य याचे, भवन्तमेकान्तमियन्तमऽर्थम् ।
अविस्मृतिस्त्वच्चरणाऽरविन्दे, भवे भवे मेऽस्तु भवत्प्रसादात् ॥ ४ ॥

श्रीमुकुन्दपदाम्भोजमधुनः परमाऽद्भुतम् ।
यत्पायिनो न मुह्यन्ति, मुह्यन्ति यदऽपायिनः ॥ ५ ॥

नाऽहं वन्दे तव चरणयोर्द्वन्द्वमऽद्वन्द्वहेतोः
कुम्भीपाकं गुरुमऽपि हरे ! नारकं नाऽपनेतुम् ।
रम्यारामामृदुतनुलता नंदने नाऽपि रन्तुं
भावे भावे हृदयभवने, भावयेयं भवन्तम् ॥ ६ ॥

नाऽस्था धर्मे न वसुनिचये, नैव कामोपभोगे
यद्यद्भव्यं भवतु भगवन् ! पूर्वकर्माऽनुरूपम् ।
एतत्प्रार्थ्यं मम बहुमतं, जन्मजन्मान्तरेऽपि
त्वत्पादाऽम्भोरुहयुगगता, निश्चला भक्तिरऽस्तु ॥ ७ ॥

दिवि वा भुवि वा ममाऽस्तु वासो, नरके वा नरकान्तक प्रकामम् ।
अवधीरितशारदाऽरविन्दौ, चरणौ ते मरणेऽपि चिन्तयामि ॥ ८ ॥
सरसिजनयने सशङ्खचक्रे मुरभिदि मा विरमेह चित्त रन्तुम् ।
सुखतरमऽपरं न जातु जाने, हरिचरणस्मरणाऽमृतेन तुल्यम् ॥ ९ ॥

मा भैर्मन्दमनो! विचिन्त्य बहुधा, यामीश्चिरं यातना
नाऽमी नः प्रभवन्ति पापरिपवः, स्वामी ननु श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं, ध्यायस्व नारायणं
लोकस्य व्यसनाऽपनोदनकरो दासस्य किं न क्षमः ॥ १० ॥

भवजलधिमऽगाधं, दुस्तरं निस्तरेयं, कथमऽहमिति चेतो मा स्म गाः कातरत्वम्।
सरसिजदृशि देवे, तावकी भक्तिरेका,नरकभिदि निषण्णा, तारयिष्यत्यऽवश्यम् ११

तृष्णातोये मदनपवनो,-द्धूतमोहोर्मिमाले
दाराऽवर्ते तनयसहजग्राहसङ्घाऽऽकुले च ।
संसाराऽख्ये महति जलधौ मज्जतां नस्त्रिधामन् !
पादाऽम्भोजे वरद! भवतो भक्तिनावे प्रसीद ॥ १२ ॥

पृथ्वी रेणुरऽणुः पयांसि कणिका, फल्गुः स्फुलिङ्गो लघु-
स्तेजो निःश्वसनं मरुत्तनुतरं, रन्ध्रं सुसूक्ष्मं नभः ।
क्षुद्रा रुद्रपितामहप्रभृतयः, कीटाः समस्ताः सुरा
दृष्टे यत्र स तावको विजयते, भूमाऽवधूताऽवधि ॥ १३ ॥

आम्नायाऽभ्यसितान्यऽरण्यरुदितं, कृच्छ्रव्रतान्यऽन्वहं
भेदच्छेदफलानि पूर्तविधयः सर्वं हुतं भस्मनि ।
तीर्थानामऽवगाहनानि च गजस्नानं विना यत्पद-
द्वन्द्वाऽम्भोरुहसंस्तुतिं विजयते, देवः स नारायणः ॥ १४ ॥

भवजलधिगतानां, द्वन्द्ववाताहतानां, सुतदुहितृकलत्रत्राणभारावृतानाम् ।
विषमविषयतोये,मज्जतामऽप्लवानां,भवति शरणमेको विष्णुपोतो नराणाम्॥१५॥
रजसि निपतितानां, मोहजालावृतानां, जननमरणधूलीदुर्गतिं संगतानाम् ।
शरणमऽशरणानामेक एवाऽऽतुराणां, कुशलपथि नियोक्ता चक्रपाणिर्नराणाम् १६

अपराधसहस्रसंकुलं पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे! कृपया केवलमाऽऽत्मसात्कुरु ॥ १७ ॥

यच्चिन्तितं च मनसा वचसा यदुक्तं, चक्षुःकरश्रवणपादविचेष्टितं च।
यद्यन्निशासु दिवसेषु कृतं मयैव, तत्तज्जनार्दन! तवाऽर्चनमेव भूयात् ॥१८॥
मा मे स्त्रीत्वं मा च मे दासभावो, मा मूर्खत्वं मा कुदेशेषु जन्म।
मिथ्या दृष्टिर्मा च मे स्यात्कदाचिज्जातौ जातौ विष्णुभक्तो भवामि ॥ १९ ॥
आनन्द! गोविन्द!, मुकुन्द! राम!, नारायणाऽनन्त! निरामयेति।
वक्तुं समर्थोऽपि न वक्ति कश्चिदऽहो जनानां व्यसनानि मोक्षे ॥ २० ॥
क्षीरसागरतरङ्गशीकराऽऽ, सारतारकितचारुमूर्तये।
भोगिभोगशयनीयशायिने, माधवाय मधुविद्विषे नमः ॥ २१ ॥
क्षीरसारमऽपनीयशङ्कया, स्वीकृतं यदि पलायनं त्वया।
मानसे मम नितान्ततामसे, नन्दनन्दन कुतो न लीयसे ॥ २२ ॥

वात्सल्यादऽभयप्रदानसमया,दाऽऽर्त्तार्तिनिर्वापणात्
औदार्यादऽघशोषणादऽगणितश्रेयःपदप्रापणात्।
सेव्यः श्रीपतिरेव सर्वजगता,मेकान्ततः साक्षिणः
प्रल्हादश्च विभीषणश्च करिराट् पाञ्चाल्यऽहल्या ध्रुवः ॥ २३ ॥
नाथे श्रीपुरुषोत्तमे त्रिजगता,मेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि परे, नारायणे तिष्ठति।
यं कंचित्पुरुषाधमं कतिपयग्रामेशमल्पाऽर्थदं
सेवायै मृगयामहे नरमऽहो, मूढा वराका वयम् ॥ २४ ॥
हे लोकाः! शृणुत प्रसूतिमरणव्याधेश्चिकित्सामिमां
योगज्ञाः समुदाहरन्ति मुनयो, यां याज्ञवल्क्यादयः।
अन्तर्ज्योतिरऽमेयमेकमऽमृतं कृष्णाख्यमाऽऽपीयतां
तत्पीतं परमौषधं वितनुते निर्वाणमाऽऽत्यन्तिकम् ॥ २५ ॥
बद्धेनाऽञ्जलिना नतेन शिरसा, गात्रैः सरोमोद्गमैः
कण्ठेन स्वरगद्गदेन नयनोद्गीर्णेन बाष्पाऽम्बुना।
नित्यं त्वच्चरणाऽरविन्दयुगल,ध्यानामृताऽऽस्वादिना-
मऽस्माकं सरसीरुहाक्ष! सततं सम्पद्यतां जीवितम् ॥ २६ ॥

तत्वं ब्रुवाणानि परं परस्मा,दऽहो क्षरन्तीव सुधां पदानि।
आवर्तय प्राञ्जलिरऽस्मि जिह्वे, नामानि नारायणगोचराणि ॥ २७ ॥

इदं शरीरं परिणामपेशलं, पतत्यऽवश्यं श्लथसन्धिजर्जरम् ।
किमौषधैः क्लिश्यसि मूढ दुर्मते,! निरामयं कृष्णरसायनं पिब ॥ २८ ॥
श्रीमन्नाम प्रोच्य नारायणाऽख्यं, के न प्राप्ता वाञ्छितं पापिनोऽपि ।
हा नः पूर्वं वाक्प्रवृत्ता न तस्मिंस्तेन प्राप्तं गर्भवासादिदुःखम् ॥ २९ ॥
माद्राक्षं क्षीणपुण्यान्, क्षणमऽपि भवतो, भक्तिहीनान् पदाब्जे
माश्रौषं श्राव्यबद्धं, तव चरितमऽपास्याऽन्यदाऽऽख्यानजातम् ।
मास्प्राक्षं माधव ! त्वा,मपि भुवनपतिं, चेतसाऽपह्नुवानं
माभूवं त्वत्सपर्या,व्यतिकररहितो, जन्मजन्मान्तरेऽपि ॥ ३० ॥
मदन! परिहर स्थितिं मदीये, मनसि मुकुन्दपदारविन्दधाम्नि ।
हरनयनकृशानुना कृशोऽसि, स्मरसि न चक्रपराक्रमं मुरारेः ॥ ३१ ॥
दारा वाराकरवरसुता, तेऽङ्गजोयं विरिञ्चिः
स्तोता वेदास्तव सुरगणो,भृत्यवर्गः प्रसादः ।
मुक्तिर्मध्ये जगदऽविकलं, तावकी देवकीयं
माता मित्रं बलरिपुसुत,स्तत्वतोऽन्यन्न जाने ॥ ३२ ॥
जिह्वे! कीर्तय केशवं मुररिपुं, चेतो! भज श्रीधरं
पाणिद्वंद्व ! समर्चयाऽच्युतकथाः, श्रोत्रद्वय! त्वं शृणु ।
कृष्णं लोकय लोचनद्वय! हरे,र्गच्छाङ्घ्रियुग्माऽलयं
जिघ्र घ्राण! मुकुन्दपादतुलसीं, मूर्धन्! नमाऽधोक्षजम् ॥ ३३ ॥
यत्कृष्णप्रणिपातधूलिधवलं, तद्वै शिरः स्याच्छुभं
ते नेत्रे तमसोज्झिते सुरुचिरे, याभ्यां हरिर्दृश्यते ।
सा बुद्धिर्नियमैर्यमैश्च विमला या माधवध्यायिनी
सा जिह्वाऽमृतवर्षिणी प्रतिपदं,या स्तौति नारायणम् ॥ ३४ ॥
भक्तद्वेषभुजङ्गगारुडमणि,-स्त्रैलोक्यरक्षामणि-
र्गोपीलोचनचातकाऽम्बुदमणिः सौन्दर्यमुद्रामणिः ।
श्रीकान्तामणिरुक्मिणीघनकुच,द्वन्द्वैकभूषामणिः
श्रेयो ध्येयशिखामणिर्दिशतु नो, गोपालचूडामणिः ॥ ३५ ॥
शत्रुच्छेदैकमन्त्रं, सकलमुपनिष,द्वाक्यसंपूज्यमन्त्रं
संसारोत्तारमंत्रं, समुदिततमसां, संगनिर्याणमंत्रम्

सर्वैश्वर्यैकमंत्रं व्यसनभुजगसन्दष्टसन्त्राणमन्त्रं
जिह्वे! श्रीकृष्णमन्त्रं, जप जप सततं, जन्मसाफल्यमन्त्रम् ॥ ३६ ॥
व्यामोहोद्दलनौषधं मुनिमनो,-वृत्तिप्रवृत्यौषधं
दैत्याऽनर्थकरौषधं त्रिभुवने, संजीवनैकौषधम् ।
भक्ताऽर्तिप्रशमौषधं भवभय-प्रध्वंसि दिव्यौषधं
श्रेयःप्राप्तिकरौषधं पिब मनः! श्रीकृष्णनामौषधम् ॥ ३७ ॥
आश्चर्यमेतद्धि मनुष्यलोके, सुधां परित्यज्य विषं पिबन्ति ।
नामानि नारायणगोचराणि, त्यक्त्वाऽन्यवाचः कुहकाः पठन्ति ॥ ३८ ॥
लाटी नेत्रपुटी पयोधरघटी, क्रीडाकुटी दोस्तटी
पाटीरद्रुमवर्णनेन कविभि,र्मूढैर्दिनं नीयते ।
गोविन्देति जनार्दनेति जगतां, नाथेति कृष्णेति च
व्याहारैः समयस्तदेकमनसां, पुंसां परिक्रामति ॥ ३९ ॥
अयाच्यमऽक्रेयमऽयातयाममऽपाच्यमऽक्षय्यमऽदुर्भरं मे ।
अस्त्येव पाथेयमऽतिप्रयाणे, श्रीकृष्णनामाऽमृतभागधेयम् ॥ ४० ॥
यस्य प्रियौ श्रुतिधरौ रविलोकगीतौ, मित्रे द्विजन्मपरिवारशिवावभूताम् ।
तेनाऽम्बुजाक्षचरणाम्बुजषट्पदेन,राज्ञा कृता स्तुतिरियं कुलशेखरेण ॥ ४१ ॥

"इति श्रीकुलशेखरराज्ञा कृता मुकुन्दमाला स्तुतिः"

## अथ श्रीकृष्णलीला ॥

ॐनिगमतरोः प्रतिशाखं, मृगितं च मया परब्रह्म ।
मिलितमिदानीमऽङ्के, गोकुलपङ्केरुहाक्षीणाम् ॥ १ ॥
तप्तं तपोभिरऽन्यैः, फलितं च तद्गोपबालानाम् ।
आसां यत्कुचकुम्भे, नीलनिचोलायते परं ब्रह्म ॥ २ ॥
श्रुतिमऽपरे स्मृतिमऽपरे, भारतमऽन्ये भजन्तु भवभीताः ।
अहमऽपि नन्दं वन्दे, यस्याऽऽलिन्दे परं ब्रह्म ॥ ३ ॥
किं कथयामः कस्मै, कस्य मनः प्रत्ययमाऽदत्ते ।
रमयति गोपवधूटीकुञ्जकुटीरे परं ब्रह्म ॥ ४ ॥
नीतं नवनवनीतं, केन च पीतं पयः क्व से मुरली ।
इति समुदीर्य लुठन्तं, भूमौ बालं नमामि गोपालम् ॥ ५ ॥

पश्यत बलमऽबलानामऽनाविले हृद्विले बबन्धुर्याः ।
तनु दृष्टिपातरश्म्याऽऽकृष्टमऽमूर्तं परं ब्रह्म ॥ ६ ॥
एतत्त्वामऽहमऽर्थयामि सततं, रे चित्त! चिन्तातुर!
मा चिन्तां कुरु चञ्चलेषु विषये,ष्वाऽऽगारदाराऽऽदिषु ।
गायन्तं यमुनातटद्रुमतले, नीलाम्बुदश्यामलं
गोपालं वनमालिनं कमलिनं, नन्दात्मजं चिन्तय ॥ ७ ॥
ध्यानाऽभ्यासवशीकृतेन मनसा, तन्निर्गुणं निष्क्रियं
ज्योतिः किंचन योगिनो यदि परं, पश्यन्ति पश्यन्तु ते ।
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं
कालिन्दीपुलिनेषु तत्किमपि य,न्नीलं तमो धावति ॥ ८ ॥ इति कृष्णलीला०

## अथ जयस्तुतिर्विष्णोः ॥

ॐजय नारायण! जय पुरुषोत्तम! जय वामन! कंसारे!
उद्धर मामऽसुरेशविनाशिन्! पतितोऽहं संसारे ।
घोरं हर मम नरकरिपो! केशव! कल्मषभारं
मामऽनुकम्पय दीनमऽनाथं कुरु भवसागरपारम् ॥ १ ॥
जय जय देव! जयाऽसुरसूदन! जय केशव! जय विष्णो!
जय लक्ष्मीमुखकमलमधुव्रत,! जय दशकन्दरजिष्णो! ॥ घोरं० ॥ २ ॥
त्वं जननी जनकः प्रभुरऽच्युत! त्वं पुत्रसुहृद्धनमित्रम् ।
त्वं शरणं शरणाऽगतवत्सल! त्वं भवजलधिवहित्रम् ॥ घोरं० ॥ ३ ॥
पुनरऽपि जननं पुनरपि मरणं, पुनरऽपि गर्भनिवासं ।
सोढुमऽलं पुनरऽस्मिन्माधव! मामुद्धर निजदासम् ॥ घोरं० ॥ ४ ॥
जनकसुतापतिचरणपरायण,-शंकरमुनिवरगीतं
धारय मनसि कृष्ण! पुरुषोत्तम!, वारय संसृतिभीतिम् ॥ घोरं० ॥ ५ ॥
यद्यपि सकलमऽहं कलयामि हरे! नहि किमऽपि ससत्वं ।
तदऽपि न मुञ्चति मामिदमऽच्युत! पुत्रकलत्रममत्त्वम् ॥६॥ इति विष्णुस्तुतिः

# गोविन्दाष्टकं ॥

ॐसत्यंज्ञानमऽनन्तं, नित्यमऽनाकाशं परमाऽऽकाशं
गोष्ठप्राङ्गणरिङ्खणलोल;मऽनायासं परमायासम् ।
मायाकल्पितनानाकार,मऽनाकारं भुवनाकारं
क्ष्मामानाथमऽनाथं, प्रणमत गोविन्दं परमानन्दम् ॥ १ ॥
मृत्स्नामऽत्सीहेति यशोदा;ताडनशैशवसन्त्रासं
व्यादितवक्त्राऽऽलोकित,लोकाऽलोकचतुर्दशलोकाऽलिम् ।
लोकत्रयपुरमूलस्तंभं, लोकालोकमऽनालोकं लोकेशं परमेशं प्र० ॥ २ ॥
त्रैविष्टपरिपुवीरघ्नं, क्षितिभारघ्नं भवरोगघ्नं
कैवल्यं नवनीताऽहार,मऽनाहारं भुवनाहारम् ।
वैमल्यस्फुटचेतोवृत्ति,विशेषाऽभासमऽनाभासं, शैवं केवलशान्तं प्र० ॥ ३ ॥
गोपालं प्रभुलीलाविग्रह,गोपालं कुलगोपालं
गोपीखेलनगोवर्धन,धृतिलीलालालितगोपालम् ।
गोभिर्निगदितगोविन्द,स्फुटनामानं बहुनामानं, गोधीगोचरदूरं प्र० ॥ ४ ॥
गोपीमण्डलगोष्ठीभेदं,भेदाऽवस्थमभेदाऽऽभं
शश्वद्गोखुरनिर्धूतोद्धत;धूलीधूसरसौभाग्यम् ।
श्रद्धाभक्तिगृहीताऽऽनन्द;मऽचिन्त्यं चिन्तितसद्भावं,चिन्तामणिमऽणिमानं ॥५
स्नानव्याकुलयोषिद्वस्त्रा,ण्याऽऽदायाऽगमुपारूढं
व्यादित्सन्तीरऽथ दिग्वस्त्रा, वस्त्रं दातुमुपाकर्षतं ताः ।
निर्धूतद्वयशोकविमोहं, बुद्धं बुद्धेरन्तःस्थं, सत्तामात्रशरीरं, प्र० ॥ ६ ॥
कान्तं कारणकारणमाऽऽदिमऽनादिं कालघनाऽभासं
कालिन्दीगतकालिय,शिरसि नृत्यन्तं मुहुर्नृत्यन्तम् ।
कालं कालकलाऽतीतं, कलिताऽशेषं कलिदोषघ्नं, कालत्रयगतिहेतुं, प्र० ॥७॥
वृन्दावनभुवि वृन्दारकगण; वृन्दाऽऽराधितवन्द्येहं
कुन्दाऽभाऽमलमन्दस्मेर; स्वधानन्दं सुहृदाऽऽनन्दम् ।
वन्द्याऽशेषमहामुनि,मानसवन्द्याऽनन्दपदद्वन्द्वं, वन्द्याऽशेषगुणाब्धिं,प्र०॥८॥
गोविन्दाऽष्टकमेतदऽधीते, गोविन्दार्पितचेता यो
गोविन्दाऽच्युत! माधव! विष्णो! गोकुलनायक! कृष्णेति ।

गोविन्दांघ्रिसरोजध्यान,जलधौतसमस्ताऽघो
गोविन्दं परमानन्दा;ऽमृतमऽन्तस्थं समभ्येति ॥ ९ ॥

इति श्रीशंकराचार्यकृतं गोविन्दाष्टकं सम्पूर्णम्.

# अथ शिवस्तुतिः ॥

ॐव्याप्तचराऽचरभावविशेषं, चिन्मयमेकमऽनन्तमनादिम् ।
भैरवनाथमऽनाथशरण्यं, त्वन्मयचित्ततया हृदि वन्दे ॥ १ ॥
त्वन्मयमेतदऽशेषमिदानीं, भाति मम त्वदऽनुग्रहशक्त्या ।
त्वं च महेश ! सदैव ममाऽत्मा, स्वाऽऽत्ममयं मम तेन समस्तम् ॥ २ ॥
स्वात्मऽनि विश्वगते त्वयि नाथे, तेन न संसृतिभीतेः कथाऽस्ति ।
सत्स्वपि दुर्धरदुःखविमोह,त्रासविधायिषु कर्मगणेषु ॥ ३ ॥
अन्तक ! मां प्रति मा दृशमेनां, क्रोधकरालतमां विदधीहि ।
शङ्करसेवनचिन्तनधीरो, भीषणभैरवशक्तिमयोऽस्मि ॥ ४ ॥
इत्थमुपोढभवन्मयसंविद्दीधितिदारितभूरितमिस्रः ।
मृत्युयमान्तककर्मपिशाचै,र्नाथ ! नमोऽस्तु न जातु बिभेमि ॥ ५ ॥
प्रोदितसत्यविबोधमरीचि;प्रोक्षितविश्वपदार्थसतत्त्वः ।
भावपरामृतनिर्भरपूर्णे, त्वय्यऽहमाऽऽत्मनि निर्वृतिमेमि ॥ ६ ॥
मानसगोचरमेति यदैव,क्लेशदशाऽतनुतापविधात्री ।
नाथ ! तदैव ममत्वदऽभेदस्तोत्रपराऽमृतवृष्टिरुदेति ॥ ७ ॥
शंकर ! सत्यमिदं व्रतदान,स्नानतपो भवतापविनाशि ।
तावकशास्त्रपराऽमृतचिन्ता स्यन्दति चेतसि निर्वृतिधाराः ॥ ८ ॥
नृत्यति गायति हृष्यति गाढं, संविदियं मम भैरवनाथ ।
त्वां प्रियमाऽप्य सुदर्शनमेकं, दुर्लभमऽन्यजनैः समयज्ञम् ॥ ९ ॥
वसुरसपौषे कृष्णदशम्या,मऽभिनवगुप्तः स्तवमिदमकरोत् ।
येन विभुर्भवमरुसन्तापं शमयति झटिति जनस्य दयालुः ॥ १० ॥

इति अभिनवगुप्ताऽऽचार्यकृता शिवस्तुतिः.

॥ समाप्तम् ॥

॥ श्रीः ॥

# श्रीशिवमहिम्नःस्तोत्रम् ।

## श्रीपुष्पदन्ताचार्यविरचितम् ।

तदेतदधुना

मंगलपुरनिवासिराधाकृष्णशर्मणा विद्वत्साहाय्येनान्वयपदभाषा
व्याख्यानसहितं विहितम् ।

तदेवेदम्

## क्षेमराज श्रीकृष्णदास इत्यनेन

मुंबय्यां

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-यन्त्रालये

मुद्रितम् ।

संवत् १९८५ शक १८५०



यह पुस्तक खेमराज श्रीकृष्णदासने बम्बई खेतवाडी ७ वीं गली
खम्बाटा लैन, स्वकीय "श्रीवेङ्कटेश्वर" स्टीम् प्रेसमें अपने
लिये छापकर यहीं प्रकाशित किया ।

॥ श्रीः ॥

श्रीशिवाय नमः ।

# श्रीशिवमहिम्नस्तोत्रप्रारम्भः ।



श्लोकः ।

महिम्नः पारं ते परमविदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ।
अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्
ममाप्येष स्तोत्रे हर निरपवादः परिकरः ॥१॥

अन्वयः ।

हे हर ! ते महिम्नः परं पारम् अविदुषः जनस्य कृता स्तुतिः यदि असदृशी स्यात् तर्हि किमाश्चर्यं ब्रह्मादीनाम् अपि गिरः त्वयि अवसन्नाः स्युः । अथ सर्वः स्वमतिपरिणामाऽवधि गृणन् अवाच्यः तर्हि ममापि स्तोत्रे एषः परिकरः निरपवादः ॥ १ ॥

अस्यार्थः ।

हे ( यह पद संबोधनका वाची है अर्थात् जिस्से बातकरे उसे अपनेसौंही माननेका हेतु ) दुःखदूरकरनहार आपकी महिमाका परलापार अर्थात् निर्गुण स्वरूपका वह तट जहाँ पहुँच नही

किसीका अपण्डित साधारण मनुष्यकी करी हुई स्तुति जो जैसी चाहिये तैसी न हुई तो क्या अचंभा हुआ क्योंकि ब्रह्मादिकोंकी भी वाणी आपके विषे स्तुति करनेमें रुकजाती है अर्थात् चलती नहीं इसके अनन्तर सबके सब अपनी बुद्धिके चलनेकी सीमातक स्तुति करते हुए निर्दोष हैं तो मेरेभी स्तोत्रमें यह रचना प्रकार अपवाद अर्थात् बुराईके योग्य नहीं है ॥ १ ॥

**अतीतः पन्थानं तव च महिमा वाङ्मनसयो-**
**रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि ।**
**स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः**
**पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥२॥**

अन्वयः ।

हे भगवन् तव महिमा वाङ्मनसयोः पन्थानम् अतीतः यं महिमानं श्रुतिरपि अतद्व्यावृत्त्या चकितम् अभिधत्ते स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः अर्वाचीने पदे कस्य मनः वचः न पतति सर्वेषां पतत्येव ॥ २ ॥

अस्यार्थः ।

हे षडैश्वर्यसंपन्न ( अर्थात् जिसमें छः होंय बल वैभव, यश; श्री, ज्ञान, वैराग्य वह भगवान् है ) तुम्हारी महिमा वाणी और मनके मार्गसे पृथक् है जिस महिमाको वेदभी निश्चय किये बिना चकित है अर्थात् विस्मयमें होकर कहता है वह महिमा किससे स्तुति

अर्थात् वर्णन की जाती है अर्थात् न किसीसे और कितने प्रकारके गुण हैं किसका विषय है वेभी नहीं कहेजाते परन्तु इस तट पर अर्थात् संसारके पदार्थोंपर किसके मन वाणी नहीं पहुँचते श्रीपुष्पदन्ताचार्यका भावार्थ यह है कि; सबके पहुँचते हैं ॥ २ ॥

**मधुस्फीता वाचः परमममृतं निर्मितवत-**
**स्तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम् ।**
**मम त्वेतां वाणीं गुणकथनपुण्येन भवतः**
**पुनामीत्यर्थेस्मिन्पुरमथनबुद्धिर्व्यवसिता॥ ३॥**

अन्वयः ।

हे ब्रह्मन् ! मधुस्फीताः वाचः परमममृतं निर्मितवतः तव किं सुरगुरोः अपि वाक् विस्मयपदं धत्ते । अहं तु एतां वाणीं हेपुरमथन भवतः गुणकथनपुण्येन पुनामि इत्यस्मिन्नर्थे मम बुद्धिर्व्यवसिता ॥ ३ ॥

अस्यार्थः ।

हे ब्रह्मन् ! अर्थात् हे सर्वोत्तम मधुसे मीठी परम अमृतसी निर्माण अर्थात् बनानेवाले तुम सो तुम्हें क्या बृहस्पतिजीकी भी वाणी आश्चर्यका स्थान दिखावेगी अर्थात् प्रसन्न करेगी, यह नहीं होगा—क्योंकि उत्तमोत्तम वाणीके कर्ता आपही कदाचित कहो कि, तू क्यों श्रम करता है तहाँ यह विनयहै कि, मै तो इस

अपनी वाणीको हे त्रिपुरान्तक ! आपके गुण गानेके पुण्यसे पवित्र करता हूँ इस आशयसे मेरी बुद्धिने स्तुति करना निश्चय किया है ॥ ३ ॥

**तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्**
**त्रयीवस्तु व्यस्तं तिसृषु गुणभिन्नासु तनुषु ।**
**अभव्यानामस्मिन्वरद रमणीयामरमणीं**
**विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः ॥४॥**

अन्वयः ।

हे वरद ! इह एके जडधियः तवैश्वर्यं विहन्तुं व्याक्रोशीं विदधते कथंभूतं तवैश्वर्यं जगदुदयरक्षाप्रलयकृत् पुनः कथंभूतम् ऐश्वर्यं त्रयीवस्तु पुनः कथंभूतम् ऐश्वर्यं गुणभिन्नासु तिसृषु तनुषु व्यस्तं कथंभूतां व्याक्रोशीम् अभव्यानां रमणीयां पुनः कथंभूतां व्याक्रोशीम् अस्मिन् सर्वज्ञादिगुणे अरमणीम् ॥ ४ ॥

अस्यार्थः ।

ह वरदायिन् ! इसलोकमें कोई मंदबुद्धी आपके ऐश्वर्यका खंडन करनेको निंदा करते हैं कैसा वह आपका वैभव कि, संसारका उत्पन्न पालन नाशकारक है फिर कैसा है वही ऐश्वर्य कि तीनों वेदोंका तत्त्व और फिर कैसा है ! वही ऐश्वर्य कि, गुण; सत्त्व रज, तमसे तीन स्वरूप धारे हैं जिसने और कैसी है वह निन्दा कि, अकल्याणी

पापी निन्दकोंके मनभावनी परंतु वास्तवमें फिर कैसी है वह निंदा कि इन सर्व गुणोंमें यह जो सर्वज्ञादिगुणयुक्त आपके ऐश्वर्यमें वह तो अच्छी नहीं है अर्थात् बहुतही बुरी है ॥ ४ ॥

किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ५

अन्वयः ।

खलु सः धाता किमाधारः किमीहः सन् किंकायः सन् किमुपायः सन् किमुपादानः सन् त्रिभुवनं सृजति इति अयं कुतर्कः अतर्क्यैश्वर्ये त्वयि अनवसरदुःस्थः काँश्चित् हतधियः जगतः मोहाय मुखरयति ॥ ५ ॥

अस्यार्थः ।

निश्चय करि कहो कि वह विधाता कहाँ बैठकर और किस प्रकारसे कौनसी कायासे और किस युक्तिसे और कौनसे कारण अर्थात् कौनसी वस्तुसे और किस लिये तीनों लोकोंको उत्पन्न करै है--इतने कुतर्क नहीं तर्कके योग्य अर्थात् अनिर्वचनीय ऐश्वर्य आपके विषे समय अर्थात् सावकाश न पाकर डामाडोल होते हुये कोई नष्ट बुद्धि मीमांसकोंको जगत्के मोहके हेतु वाचालतासे भ्रममें डालता है ॥ ५ ॥

अजन्मानो लोकाः किमवयववन्तोऽपि जगता-
मधिष्ठातारं किं भवविधिरनादृत्य भवति ।
अनीशो वा कुर्याद्भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ॥६॥

अन्वयः ।

हे अमरवर ! अवयववन्तः अपि लोकाः किम् अजन्मानः अपि तु न भवविधिः जगताम् अधिष्ठातारम् अनादृत्य किं भवति अपि तु न वा अनीशः कुर्यात् तदा भुवनजनने कः परिकरः यतः कारणात् इमे मन्दास्त्वां प्रति संशेरते ॥ ६ ॥

अस्यार्थः ।

हे देवोत्तम ! अंगों सहितभी जो सब लोक ये क्या अजन्मा हैं अर्थात् इनका उपजानेवाला है संसारके होनेकी विधि जगत्के कर्ता को नहीं माननेसे क्या होसक्ती है अर्थात् नहीं होती है अथवा विना ईश्वर जन्मका देनेवाला कहैं तो चौदह भुवनके उत्पन्न करनेकी सामग्री कौन कौनसी हैं जिस कारणसे ये मन्दमति आपके होनेमें संशय करते हैं आशय यह है कि, जगत् तुमसे ही है ॥ ६ ॥

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां

नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥७॥

अन्वयः ।

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवम् इति प्रस्थाने प्रभिन्ने इदं परम् अदः पथ्यम् इति च रुचीनां वैचित्र्यात् ऋजुकुटिल-नानापथजुषां नृणाम् एको गम्यःत्वम् असि पयसाम् अर्णवः इव।

अस्यार्थः

तीनों वेद साङ्ख्यशास्त्र योगशास्त्र शैवमतावलंम्बी और वैष्णव इन अनेकमतोंसे जो तुम एक स्थान हो सो पृथक् पृथक् होनेसे अपनेको सब बडा अच्छा और सुखदायी यही है यों कहते हैं यह अपनी अपनी रुचिकी विचित्रतासे सूधे टेढे अनेक मार्गगामी मनुष्योंको एक आधार मिलनेको तुमहीं हो गंगादि सब नदियोंके जलोंको समुद्र जैसे७

महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः
कपालं चेतीयत्तव वरद तन्त्रोपकरणम् ।
सुरास्तांतामृद्धिं विदधति भवद्भ्रूप्रणिहितां
नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ८॥

अन्वयः ।

हे वरद महोक्षः खट्वाङ्गं परशुः अजिनं भस्म फणिनः कपालं च इति इयत् तव तन्त्रोपकरणं भवद्भ्रूप्रणिहितां सुराः तां ताम् ऋद्धिं विदधति अहो यद्येवं तर्हि स्वयम् एव

कथं न भुङ्क्ते स्वात्मारामं विषयमृगतृष्णा नहि भ्रमयति॥८॥

अस्यार्थः ।

हे वरद ! बूढा तो बैल खाटकी पाटी और नरपिंजर फरसा मृगचर्म भस्म सर्प और कपाल इतनी यह आपकी संपदाहै और आपकी भ्रुकुटीके प्रसादसे देवता ऐसी ऐसी ऋद्धिसिद्धि भोगते हैं--तहां वादीका कथन है कि, यह बडा अचरज है जो ऐसा है तो आपही क्यों नहीं भोगें तहां कहै हैं कि, रे वादी ! सुन अपने स्वरूपमें रमण करनेवालेको विषय रूपी मृगतृष्णा नहीं भ्रमाती है ॥ ८ ॥

## ध्रुवं कश्चित् सर्वं सकलमपरस्त्वध्रुवमिदं
## परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये।
## समस्तेऽप्येतस्मिन् पुरमथन तैर्विस्मित इव
## स्तुवन् जिहेमि त्वां न खलु ननु धृष्टा मुखरता।

अन्वयः ।

हे पुरमथन ! कश्चित् भवद्दर्शनानुयायी सकलम् इदं जगत् ध्रुवं गदति तु पुनः अपरः अध्रुवं गदति परः ध्रौव्याध्रौव्ये गदति एतस्मिन् समस्तेऽपि जगति व्यस्तविषये सति अहं तैर्विस्मित इव त्वां स्तुवन् जिहेमि यद्येवं तर्हि कथं स्तुतौ प्रवर्त्तसे सत्यं नन्वहो खलु इति निश्चयेन मुखरता न धृष्टा अपि तु धृष्टैव ॥ ९ ॥

अस्यार्थः ।

हे पुरमथन ! कोईएक आपके दर्शन पालनेवाला अर्थात् शिवमतानुयायी इससम्पूर्ण जगत्को निश्चल अर्थात अविनाशी कहते हैं और कोई चलायमान अर्थात् नाशवान् कहे हैं और इनसे बढकर कोई अविनाशी और नाशवान् भी कहते हैं इन सबही बौद्धादिकोंकी वाणी संसारके उलटे विषय कहने सुननेसे मैं उनसे अचम्भितसा आपकी स्तुति करते लज्जित होताहूँ जो ऐसा तो क्यों स्तुति करते हो यह सत्य है परन्तु निश्चय जानो कि, मेरी वाचालता क्या ढीठ नहीं है वास्तवमें ढीठही है स्तुति किये बिन नहीं मानती ॥ ९ ॥

तवैश्वर्यं यत्नाद्यदुपरि विरिंच्यो हरिरधः
परिच्छेत्तुं यातावनलमनिलस्कन्धवपुषः ।
ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश यत्
स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति ॥

अन्वयः ।

हे गिरिश ! अनलम् अनिलः स्कन्धवपुषः तव यत् ऐश्वर्य तत् यत्नात् परिच्छेत्तुम् उपरि विरिंच्यः अधः हरिः यातौ ततः भक्तिश्रद्धाभरगुरुगृणद्भ्यां ताभ्यां स्वयं तस्थे हे भगवन् ! तव अनुवृत्तिः किं न फलति अपितु फलत्येव ॥ १० ॥

अस्यार्थः ।

हे गिरिश ! अग्नि वायु पर्यन्त शाख जिसकी ऐसा जो देह आपका

उसका जो ऐश्वर्य तिसको यत्नसे नापकर छोर लेनेको ऊपर आकाशको ब्रह्मा और नीचे पातालमें विष्णु गये परन्तु वह न पाया तब हार कर भक्तिश्रद्धासे परिपूर्ण हो स्तुति करने लगे तभी उन दोनोंको आपही अपने मनसे मिले आश्चर्य यही है कि; हे भगवन् ! तुम्हारे स्मरणकी अनुवृत्ति अर्थात् सेवा क्या नहीं फलीभूत होती है अर्थात् होती ही है ॥ १० ॥

**अयत्नादासाद्य त्रिभुवनमवैरिव्यतिकरं**
**दशास्यो यद्वाहूनभृत रणकण्डूपरवशान् ।**
**शिरःपद्मश्रेणीरचितचरणाम्भोरुहबलेः**
**स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम् ॥**

अन्वयः ।

हे त्रिपुरहर ! दशास्यः यत् अयत्नात् अवैरिव्यतिकरं त्रिभुवनम् आसाद्य रणकण्डूपरवशान् बाहून् अभृत तत् इदं शिरः पद्मश्रेणीरचितचरणाम्भोरुहबलेः स्थिरायाः त्वद्भक्तेः विस्फूर्जितम् अस्ति ॥ ११ ॥

अस्यार्थः ।

हे त्रिपुरहर ! रावणने जो विना यत्न शत्रुरहित त्रिभुवनको पाकर अर्थात् सहजहीमें वैरी मिटाके संग्रामी खुजलीके परवश भुजाओंको धारण किया अर्थात् निष्कण्टक बिचरा सो यह शीशरूपी कमलकी माला बनाकर आपके चरण कमलकी पूजा अचल भक्तिसे करनेका प्रताप है ॥ ११ ॥

अमुष्य त्वत्सेवासमधिगतसारं भुजवनं
बलात् कैलासेऽपि त्वदधिवसतौ विक्रमयतः ।
अलभ्या पाताले प्यलसचलितांगुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद् ध्रुवमुपचितो मुह्यति खलः

अन्वयः ।

हेभगवन् ! त्वदधिवसतौ कैलासे त्वत्सेवासमधिगतसारं भुजवनं बलात् विक्रमयतः अमुष्य रावणस्य पाताले प्रतिष्ठा अलभ्या आसीत् कस्मिन् सति त्वयि अलसचलिताङ्गुष्ठ-शिरसि सति ध्रुवम् इति निश्चयेन उपाचितः खलः मुह्यति १२॥

अस्यार्थः ।

हे भगवन् ! आपके निवासस्थान कैलासमें आपहीकी सेवासे मिला ९ बल जिनको ऐसे भुजाओंके समूहसे पराक्रम कर रहा अर्थात् कैलास को उठा रहा है इस रावणको पातालमें भी स्थिरता न मिली काहेसे कि, तुमने अलसहीमें अर्थात् सहजहीसे चलाई पैरके अंगूठेकी नोक अर्थात् अँगूठेकी नोंकसे भुज दबे और खेदसे रोते हुयेको स्थिरता न हुई यह बात ठीक है कि ओछेकी बढवार हुई और वह इतराया परन्तु फल कैसा पाया जो बड़ा रोनेवाला नाम पाया ॥ १२ ॥

यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सती-
मधश्चक्रे बाणः परिजनविधेयस्त्रिभुवनः ।

न तच्चित्रं तस्मिन् वरिवसितरि त्वच्चरणयो-
र्नकस्याप्युन्नत्यैभवतिशिरसस्त्वय्यवनतिः १३

अन्वयः ।

हे वरद ! परिजनविधेयत्रिभुवनः बाणः परमोच्चैः अपि सतीं सुत्रामणः ऋद्धिम् अधः चक्रे तत् त्वच्चरणयोः वरिवसितरि तस्मिन् चित्रं न त्वयि शिरसः अवनतिः कस्यापि उन्नत्यै न भवति अपि तु सर्वेषां भवत्येव ॥ १३ ॥

अस्यार्थः ।

हे वरदायक ! अधीन कर लिये हैं त्रिभुवन जिसने ऐसा जो बाणासुर उसने बडीसे बड़ीभी इन्द्रकी समृद्धिको अपने वैभवसे नीचीकर दिखाई सो आपके चरणोंमें एकाग्रचित्त रहनेवालोंको यह अचंभा नहीं क्योंकि आपको मस्तक झुकानेवालोंमें किसीकी भी उन्नति क्या न हुई निश्चय है कि, सबहीकी होती है ॥ १३ ॥

अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा-
विधेयस्यासीद्यस्त्रिनयन विषं संहृतवतः ।
स कल्माषः कण्ठे तव न कुरुते न श्रियमहो
विकारोऽपि श्लाघ्यो भुवनभयभंगव्यसनिनः॥

अन्वयः ।

हे त्रिनयन ! अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा-

विधेयस्य विषं संहृतवतः तव कण्ठे यः कल्माषः आसात् सः किं श्रियं न कुरुते इति न अपि तु कुरुते एव अहो इति आश्चर्यं भुवनभयभङ्गव्यसनिनः विकारः अपि श्लाघ्यः भवति ॥ १४ ॥

अस्यार्थः ।

हे त्रिलोचन ! असमय एकाएकी ब्रह्मांडका नाश होता जानि घबराये हुए देवता असुरोंके ऊपर कृपा करि विषपीनेवाले जो तुम सो आपके कण्ठमें जो चिह्न हुआ है सो क्या शोभा नहीं करता अर्थात् करताही है यह बड़े चमत्कारकी बात है कि, लोकभय तोडनेके व्यसनीका विकार भी अर्थात् लांछनभी स्तुतिके योग्य होता है॥१४॥

असिद्धार्था नैव क्वचिदपि सदेवासुरनरे
निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः।
स पश्यन्नीश त्वामितरसुरसाधारणमभूत्
स्मरःस्मर्तव्यात्मा नहि वशिषु पथ्यःपरिभवः॥

अन्वयः ।

हे भगवन् ! यस्य स्मरस्य विशिखाः सदेवासुरनरे जगति नित्यम् असिद्धार्थाः क्वचिदपि नैव निवर्त्तन्ते हे ईश ! सः स्मरः इतरसुरसाधारणं त्वां पश्यन् स्मर्तव्यात्मा अभूत् अहो युक्तम् एतत् वशिषु परिभवः पथ्यः न भवति ॥ १५ ॥

अस्यार्थः ।

हे भगवन् ! जिस कामदेवके बाणोंने सब देवता असुर मनुष्योंको जगत्में नित्य दिन अपना अर्थ साधे कभी न फिरे अर्थात् सबको जीताहै हे ईश ! उस कामने और देवताओंके समान आपको भी जाना तौभी स्मरणके योग्य हुवा अर्थात् भस्म हुवा आपकी दृष्टिसे यह बात ठीक ही है कि जितेन्द्रियका अनादर करना अच्छा नहीं होता ॥ १५ ॥

मही पादाघाताद्व्रजति सहसा संशयपदं
पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम्
मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताडिततटा
जगद्रक्षायै त्वं नटसि ननु वामैव विभुता १६॥

अन्वयः ।

हे भगवन् ! यदा त्वं जगद्रक्षायै नटसि तदा मही पादाघातात् सहसा संशयपदं व्रजति विष्णोः पदं भ्राम्यद्भुजपरिघरुग्णग्रहगणं भवति अनिभृतजटाताडिततटा द्यौः दौस्थ्यं याति ननु इति निश्चयेन भवतो विभुता वामा एव ॥ १६ ॥

अस्यार्थः ।

हे भगवन् ! जब तुम जगत्की रक्षाके लिये नृत्य करते हो तब पृथ्वी पांवकी ठोकरसे शीघ्रही संदेहमें होती है आकाशमें फिराना हस्तरूपी परिघको देख क्लेशित ग्रहोंका समूह होता है और जटाजूटकी

गडसे स्वर्ग वारंवार चल विचल होता है यही निश्चय है कि आप की प्रभुता टेढी है जानी नहीं जाती ॥ १६ ॥

वियद्व्यापीतारागणगुणितफेनोद्गमरुचिः
प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ।
जगद्द्वीपाकारं जलधिवलयं तेन कृतमि-
त्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः १७॥

अन्वयः ।

हे भगवन् ! वियद्व्यापीतारागणगुणितफेनोद्गमरुचिः यः वारां प्रवाहः ते शिरसि पृषतलघुदृष्टः तेन द्वीपाकारं जगत् जलधिवलयं कृतं हे धृतमहिम ! इत्यनेन एव दिव्यं तव वपुः उन्नेयम् ॥ १७ ॥

अस्यार्थः ।

हे भगवन् ! आकाशमें फैला हुवा तारागण रूपी झागसे शोभित जो जलोंका प्रवाह आपके शीशमें जलकी बूंदके समान छोटासा देखा गया तिसने द्वीपके तुल्य जगत्को समुद्ररूपी कंकणसे घेरलिया है हेधृतमहिम ! धारीहै महिमा जिसने इसीसे दिव्य आपका शरीर अनुमान करने योग्य है ॥ १७ ॥

रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथांगे चन्द्रार्कौ रथचरणपाणिः शर इति।
दिधक्षोस्ते कोयं त्रिपुरतृणमाडम्बरविधि-

विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः १८॥

अन्वयः ।

हे भगवन् ! त्रिपुरतृणं दिधक्षोः तव अयं कः आडम्बर-विधिः कोऽसौ रथः क्षोणी यन्ता शतधृतिः अगेन्द्रः धनुः रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शरः इति अहो युक्तम् एतत् खलु इति निश्चयेन विधेयैः क्रीडन्त्यः प्रभुधियः न परतन्त्राः ॥ १८ ॥

अस्यार्थः ।

हे भगवन् ! त्रिपुररूपी तृणके भस्म करनेवाले आपको यह इतनी सामग्री क्यों चाहिये । कौनसी कि, रथ पृथ्वी सारथी ब्रह्मा हिमाचल धनुष पहिये चन्द्र सूर्य और चक्रपाणि भगवान् बाण यह बात योग्यही है कि, जो बनानेके योग्य पदार्थ हैं उनके साथ क्रीडा करती हुई समर्थोंकी बुद्धि पराये वश नहीं होती ॥ १८ ॥

हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा
त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् १९॥

अन्वयः ।

हे त्रिपुरहर ! हरिः कृष्णः तव पदयोः साहस्रं कमल-बलिम् आधाय तस्मिन् सहस्रे एकोने सति निजं नेत्रकमलं

यत् उदहरत् असौ भक्त्युद्रेकः चक्रवपुषा परिणतिं गतः सन् त्रयाणां जगतां रक्षायै जागर्ति ॥ १९ ॥

अस्यार्थः ।

हे त्रिपुरहर ! विष्णु भगवान् आपके चरणोंको सहस्र कमल ले पूजनको बैठे तिस समय सहस्रमें एक घटा तब अपना एक नेत्रकमल उखाड सहस्र पूरेकर पूजा कीनी यही जो उत्कट भक्ति सो चक्रस्वरूप होकर त्रिलोकीकी रक्षाके हेतु विद्यमान है ॥ १९ ॥

क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां
क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते ।
अतस्त्वां संप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं
श्रुतौ श्रद्धां बद्धा दृढपरिकरःकर्मसु जनः २०

अन्वयः ।

हे भगवन् ! जनः श्रुतौ श्रद्धां बद्धा पुनः क्रतुषु फलदान-प्रतिभुवं त्वां संप्रेक्ष्य कर्मसु दृढपरिकरः वर्तते कुतः यतः क्रतौ सुप्ते सति त्वं जाग्रत् असि अतः क्रतुमतां प्रध्वस्तं कर्म पुरुषा-राधनम् ऋते क्व फलति अपि तु न फलति इत्यर्थः ॥ २० ॥

अस्यार्थः ।

हे भगवन् ! मनुष्य वेदमें श्रद्धा बांधिकर फिर यज्ञके फलदाता स्वरूप आपको देख कर्मोंमें दृढ विश्वास कर वर्तैहै क्योंकि जिससे यज्ञके सोवनेमें भी आप जागते हो इसी कारण यज्ञ करनेवालोंको कर्मकी

रय पय कुनि गव भूरि, फलकुलिनूय मूरि रव, कुनि तमाये कुनि तक भूरे, शमा होरि त पूरि रव, कृपा त कारुण युस्र पानै जाने, मनूय मारि दिन त रात, सर्वरूप ध्यान पर्जाने, मनै मानि त ननिस जात, युस रूप तरि त दीप सन्दारे, नाथ सो नृप विचारि मन, किंह मूदि त किंह बिमारे, कैंसि ज्ञान खोंरू त तारे नाव, माता रूपी समुद्र धाम तो, पिव तत् उ-पासी मय पिव, चर चरि तत् रूपी, रव रूपी त्रिभाविन् ॥ अन्दर त्रूख्यू त निभर सिदी, उदिख नाग त जागुख तती, किंह भिमारे रस्ति य मूदी, किंचन विदू न त रूदी तती ॥ ना नमुस न कदाचित् नमनो, नितममनो सदा सर्वदा, आकाश-रूप जगि अन्दर रमनो, तथी नमूस तथा सुनमनो ॥ पद हियि त पाद छ्युम अज्ञान्, अज्ञन् अज्ञन् अपुं रूप, अग्नि-कुण्ड येथ रूप सन्दारे, अमृतधारि पिवान देह, पानस मानि त भियिन स्वारे, निशि काठस्र् तारि चन्दन भुय, यिथ भुय हिये चन्दनधारे, सहज ग्वारि त ननिस जात, धात गालित क्या विचारे, पानूह् मरि त सन्दारे भिय, विह गालि त अ-मृत तारे, तिथू यि रूप चि वरि क्याह ।

अर्पावेत् जन्म चिदानन्द, हंसद्वार रव रगता रूप, यति कूनि उछ्यान तति पानै, सर्व ध्यानै रद् मस रूप, दीपप्रकाश तेजरव पानै, मि जान्यौं मने छ्यो, ज्ञान आकाश वाणी नि-र्वाणी, मनि सहाय स्थानस स्थानै छ्यो, आरामी रामी भुल्र पान, भुये भुयि त म्यानि छ्यो, शयि आशक शयि छ्वोस, लयि पानै भुयि छ्युस, निरित गच्छान तिलित एवान, मिलित

पान दयै छ्युस, नादय बिन्दुह पदय परम, मदय मारिफतय छ्युस, विष्णु ब्रह्मा महेश्वर, कृष्ण श्यामसुन्दर छ्युस, पूरा तोलि रामा भोलि, ब्रह्म स्वामी मन्दोरि छ्युस, यि किंह काङ्क्षि ति किं ह दिये, दूकान स मुद्रूय छ्युस, डेशान दिशन हैरान गयस, निशान मि अनू मस शून्यालये ॥ छल लदूं च्यर्कस त कल आयि मशान, यिमन षण्ण सतन हुशार भुयि ॥ छ्यु न कुने छुना कुने, उछ्युं और न योर न कुने, दियि फश तुले मूल न कुने, छ्युवै चेतन त स्वारितौन कुने ॥ और ति जीवा योर ति जीवा, जीवस जीवा रस ख्यावान, युस्न नानारङ्ग रवण छ्यु, प्रत्कुणे वातउनू, च्यानू म्यानू रानू भिन्नू, नत लानू अकुय सुय ॥ न पृथ्वी न पीठी न पाताले, न तले अपारेजित, अन्तराशुद्धं शान्तं, निर्मलं सर्वं ततदेवः ॥ कौन मरि त कौन पितरे, समुद्र तारे थाह, मधुरस गङ्ग त शशि औतारे, पानस पान पूशारे, हि मालय चूय वालिख, तवा पश्च सारिम् एकान्त, न दाह दिये न किश्च प्रावे, ठहरावे स्निह न किंह, कांक्षा पूरे आकाक्षितू वाते, पानै दाता भुक्ता आसे, वासन्य गाले, भ्रान्ताह त्रावे, नानारङ्ग सीर नाथा भावे, माता पिता भ्राता पानै, प्रथ थानै न कथ निये, निराकार रूप लागित पानै, सत्पानै न कथ निये ॥ कौन जाने तेरा स्वभाव प्रभाव परमानन्दा जी, जो सरे हृदय में पावे जैसे प्रभा श्रीभास्करा जी ॥ सारा तत्व आहारिं, गार चापूं भ्रमवाउं, अखण्ड मण्डल त पाताल हाहूमे, गिव विलावों अङ्ग नावों विशेषागङ्ग ॥ चितै लगीय त परदूय पान जान,

चित्तै लगीय पर्जान पान, चित्तै लगीय लिङ्ग छ्यूय उपर्जान, तिङ्ग जान म्यूठ त शुद्धू जान पान, वाव रङ्ग द्वादश रव संघट, माया तृष्णा मारे मन, भ्रान्त त्राव नाथ छ्यू पनती घरे, सात रङ्ग सुय त ज्ञानदेह, भात्र भिन्नो भिन्नो त नाव छ्यूस क्रैटान, अङ्गन अङ्गन अकुय पय, लय पवनस मय छ्यूय भानुस, मानून त पानस निशि छ्यूय् दय्, मूर्ताह करि त पच्यु खाख, छ्यता क्याह पच्यू, पञ्च महाभूत करिन फचे, हिचू माया करिना भूत्, मन गालि त पानै विचि, अह ग्वारि तक्याह इच्छे, भियन ठरू डालि त पानै नचे, वाह वाह गुल फुली ना तुल्, नामूल गण्डेत दण्डो द्रायाय, भूतस क्याह लभू तस आसन ज्याय। न भुयि पाप तस न पुण्य खुय तस्, आसान भुयि तस् नासान ज्याय्, सम्भूर वीरू वातान भूतस्, तम्भूर साजुय गूँ यस् भुय्, शशिधारि लव दि महाभूतस्, गम्भीर तोतस क्याह बोल्याह, अनेक नजूमिजं दर्याव अवै, स्वभाव आव स्वरूप, न किह थव त न किह त्राव, बहु दीप आव छ्यपान रूप, आकाश स मदूर वछूं धार, तव ता रङ्गमस् पय, दीपा शशि रव् रूप औतार, बहाकार निराकार, युसा कन्दि भस करि, पसुं तहान्दू शून्यारूप, शास्त्र शस्त्र क्याह मुचरि लुहार, अग्नस् मारिस देह, किंह न स्व मंगे किंह न सुरे, ध्यान स्व वरे भिय त पान्, अन्य षन् मनूह गण्डीत, पान ऋषि यिस फाकी भान, भरित् त पान साकी वाकी दानेस्त, दोलो चरो हर कांक्षा पूरे, खसिहिं आयेत् स्वय शन् आयेन करनै, शीतल माह भुख ॥ दर्याव अन्दर

अंशा आव, जाव मि चि त जायिस मि चू, मि चूयू भोग त न्यामूच् ख्याव, मि चिय गय आयाव वर हित यिति, सुर रहोम्न समूरिन् मि चि माजि त वाव, अग्न आव त वाहू वाहू रङ्ग, आज्ञा आयित चलू चूर जन, वाव आसू उथदृन्य त, किथसन् पिव रहिनिशान् ईश्वर सन्दू नाव, किति आयाव त कतू सन गवू, समूरित् साधित तमि कज्याव, देव हित मुखे त सेव कर हास, छुतुनस काम क्रोध लोभ मोह, मद् अहङ्कार चाव संसारस्, अमल करिस्, पतै अहमाल, अमल होर्नगव, पछ्र आयाव त कुसू क्याह नियें, ईश्वर वादहित कज्याव्, यति आयाव त आसू मनुष्या देहू, युसूं देव सुरे मनस भाव प्रथ जीवस्, तिम जू सेवकस् मालि अथि आये, तिमय् छिचय मनुष्य, नत किह द्राय् गुपन्, यिमन् आदन सु पान मशीत गौ, पियकु शुडित चेतन सु धन सोरिख, छ्यन्यू भाजुंह कति मालि दर्कार यिये, सहज त आनन्द रहहा धारित्, पानै पान् सन्धारित कित्, सहजज्ञान रजिय परमानन्द आव रूप, सानन्द आसि कुये आत्मा रजिय वाचू, सामनद मधुरसा नद् वहवन्ये ॥ ॥ ॐ भूयो न बीजं तोया न तेजस्, वायुर्नाकाशं अवताह सर्वम्, नजि ब्रह्माण्डं नच खात्म आत्मं, शक्तिस्वरूपं परंब्रह्म सोहम् ॥ १ ॥ पुरुषो न पुरुषार्थात् विमर्शो न मर्षात्, वर्ण तेजः शान्तरन्तर आकाशम्, सूक्ष्मो न विस्तार न परं व्यापारं, न ह अन्तधारं परंब्रह्म सोहम् ॥ २ ॥ स्थावर न जङ्गम नह चतुर्वर्ण, जग न चराचर तत्परमाकार, सत् नासतो अच्छिन्नधारं, सूक्ष्मो स-

माधि परंब्रह्म सोहम् ॥ ३ ॥ ज्योगो न ज्युगान्तर सन्यासवर्ण, तुर्यावतीर्णा तत्प्रसिद्धोहम्, अचिन्त्यरूपं परमाकारं, स्थिर केवलोहं परंब्रह्म सोहम् ॥ ४ ॥ माता न पिता भ्राता न बन्धु, वार्ता स वेदं एकः केवलोऽहम्, गुरो न च्येला मन्त्रो न लीला तत् यू इकला परंब्रह्म सोहम् ॥५॥ मोहो न बुद्धि न च वैराग्यं, न च रागद्वेषं निर्वैर शान्तिः, स्वप्नो न जाग्रत् तत् शुद्धबोधं, सूक्ष्मो स्वयम्भूः परंब्रह्म सोहम् ॥ ६ ॥ पादू न वीजम् नच चतुर्भुजा, कारं न त्रिजग् अनन्तरूपम्, सहस्रनामं निराकारं, शुद्धस्वरूपं परंब्रह्म सोहम् ॥ ७ ॥ सिद्धू न सिजू विद्या न गति, सिद्ध ना परीक्षा आकाशरूपम्, खाकाश उलङ्घित् नच राजयोगं लम्भन निरालं परंब्रह्म सोहम् ॥ ८ ॥ रूप ना रस् स्पर्श गन्ध न देहो, यू यू न दायिस छ्युस् केवलोहम्, जीवो न जीवता न वक्ता न वार्ता, कर्ता सहोकार परंब्रह्म सोहम् ॥ ९ ॥ इडा न पिङ्गला नच ब्रह्मनाडी, सा हि सुषुम्ना पायाहमेव, अनाहत अनामय तुरीयावस्था, आनन्दरूपं परंब्रह्म सोहम् ॥ १० ॥ ॥ ॐ तत् अन्तरदृष्ट सम्भावों, यिय मि त्रावों तिय आवों नये ॥ १ ॥ ललमाघव शिव इकावों, भिकावों देह पानै, चित्त अन्तर मञ्जले सावों, ललावों त भावों नये, पूरू विचार प्रगितू आवों, ये मि त्रावों तिय् आवों नये, यमि त राजे सम्भावों, सावो आवों सुय पानय्, मन सत असत सिरावों, लानू त्रावों कस्र मुल्र् दिये, ओमूय् म्यानू सारू त तवै छ्यस सावों, यिय् मि त्रावों तिय् आवों नये ॥ २ ॥ देहान्तर सुषुप्त सावों, जगावों तुरीया आये, अनाहत आनन्द खिलावों, मिलावों अनामय चूय्, तद्रूप् मि पान लिलावों, भु छ्यस

सावो त किंह न रावों नयि ॥ ३ ॥ कलि कले मिलनावों, ललि हावों रूप पानै, तवै अन्तर देह नावों, पिवावों रस पानै, तवै तुष्टि निधाना म्रावों, श्रु छ्यस् सावो त किंह न रावों नये ॥ ४ ॥ बुध क्षयं च्ययं प्रकृटियं, छुम् वैराग्य अक्षय धाम, दुनू गोचर विचार सावों, निवाव ऋषीस तवै, आदि सत् आचार आवों, श्रु छ्यस् सावो त किंहन रावों नये ॥५॥ न खूचूस न किंह लज्ञो, उपजितू पानै आव् , न मि करो त न सम्पन्नो, रोजूस् सूह जहेत् अवय्, रीच् म्रीच् त नीचू नि-भावों, श्रु छ्यस् सावो त किंह न रावों नाये ॥६॥ तत्प्रसन्नो उदय द्रावों, अङ्ग लागित् जगमा मुये, न खूचिव् लोकै रजि पजे, निर्मल शुद्ध शिवै, दिन प्रलय तत् एकावों, श्रु छ्यस् सावो त किंह न रावों नये ॥ ८ ॥ एकुत् परम बोध सदा-नन्द तस् , विदेह समाध यस सुर आसे, ऋजु सिजू विद्या यसू अदुर आसे,तत्पदवी रसे भिक्याह आसै, रिद्ध सिद्ध विद्या ग्रजे आगरै तस् , गरै विभव सागरै ग्वाह, करे सूर्य उदय चलि घटकारूय् , सहज विचार तत्सार बोध, व्रत सत् तत्वबोध शुद्धो आचारः, यियू व्यवहारः वेद तै योग, चू कु श्रु कु वि-चारः अच्छिन्नधारः, सूय चेन रूप यि रूप सु रूप, पररूप वले आकले निरञ्जनारूप्, यियू शुभ लोभ भजान् वेगबले, अजरामर आसे शुद्धो देह ॥ ॥ इति श्रीमदलक्ष्येश्वरी परपर्याय-साहिभ दररूपभवानी वाक्यमञ्जरी सम्पूर्णा ॥ ॥

---

## अथ सरस्वतीस्तुतिः ॥

ॐ सितवर्णालङ्कारे सरस्वति समस्तवाङ्मयाधारे ! । कमलजमानसवरटे मृगाङ्कधवले नमस्तुभ्यम् ॥ १ ॥ धन्यः स एव लोके स एव पूज्यः स एव सर्वगुरुः । यस्य मुखकमलकोशे वाङ्मया कुलदेवते वससि ॥ २ ॥ कस्त्वां विना विवेकी विवेकविकलस्य निष्फलं जन्म । तस्माद्भारति भविनां त्वमेव हेतुर्विवेकेऽपि ॥ ३ ॥ लक्ष्मीवानपि पुरुषः शूरः सुभगोपि कामसमरूपः । वृष इव विबुधसभायां प्रतिभात्यमले त्वया रहितः ॥ ४ ॥ मुनिमनुजमाननीयो मातर्मूर्खोपि मानवो दक्षः । निःशेषशास्त्रवक्ता त्वन्मन्त्रध्यानतो भवति ॥ ५ ॥ कुवलयदृशः क तावद्वेश्मनि विलसन्ति कुचभरानम्राः । यावदसिताब्जनयने न त्वं तुष्टासि देवि भुवि भविनाम् ॥६॥ जित्वा नरोरिराजकमगशुरुगजवाजिपुरुषबलसहितः । यदुपैति तत्समग्रं त्वच्चरणनुतेः फलं तस्य ॥ ७ ॥ आवर्जितापि कष्टैरिह जन्मनि मुञ्चति नरं श्रीः । न त्वं सप्तभवेष्विति मत्वा को नौति नो भवतीम् ॥ ८ ॥ कविवरवदनसरोरुहविहरणविस्रम्भविभ्रमद्भ्रमरि । भगवति पञ्चमुखीश्वरि वागीश्वरि नमस्तेस्तु ॥ ९ ॥ शम्भुप्रणतां वाणीं भक्त्या यः स्तौति सोऽचिरेणैव । अवहितबुद्धिप्रसरः कविराजो जायते मनुजः ॥ १० ॥

इति सरस्वतीस्तुतिः ॥

---

## हमारे क्रेयपुस्तक मिलने का पता—

पं० केशवभट्ट ज्योतिषी पाठशाला टीचर, जिल्ला रैणावारी, महल्ला भाग ज्योगीलङ्कार कश्मीर—श्रीनगर.

| क्रेयपुस्तकसूची | मूल्य |
|---|---|
| (१) नित्यकर्मविधिः (शिक्षा-स्नानविधि-सन्ध्योपासना-नैवेद्यमंत्र-भोजनविधि-पञ्चायतनपूजा-पञ्चगव्यविधि-गुरु-गायत्री-सरस्वती-गौरी-मुकुन्दमालादिस्तोत्रात्मकः) | ।) |
| (२) नित्यकर्मविधिः (स्नान-सन्ध्या-नैवेद्य-भोजन-पञ्चगव्यादिविध्यात्मकः) ... ... .... | =) |
| (३) कर्मकाण्डपुस्तकं (सांवत्सरिकपितृकर्मोपयोगि) ... | ।।।=) |
| (४) वेदकल्पद्रुमः (हवनक्रियोपयोगी—) ... | १।) |
| (५) मेखलापुस्तकं (ऋचक-विवाह-मेखला-अग्निकुण्डपूजा-नान्दीश्राद्ध-इहकेलि-कन्यासंस्कारात्मकम्) | १॥) |
| (६) शिवपूजा (बहुरूपगर्भ-महिम्नःपार-शिवकवच-निर्वाण-चामर-क्षमापनादिस्तोत्र दीनाक्रन्द-शिवपूजा-गणेश-स्तवराजात्मिका) .... .... ... | ।=) |
| (७) गणेशदुर्गास्तोत्रावली (गणेशस्तोत्रत्रय-गणपतिविद्या-रत्नमाला—शारिका—ब्राह्मीविद्यात्मिका) .... | ।–) |

# شکریہ ادا

خاکسار اُن اصحاب کا تہ دل سے شکریہ ادا کرتا ہے۔ جنہوں نے کہ اِن رسالے کو بایہ تکمیل تک پہونچانے کے لئے امداد دی۔ خصوصاً شریان پنڈت واسدیو صاحب شاستری نے بخت بھاؤ کے زیر اثر اپنے قلم گوہر رقم سے راگنیا استوتی کو سنسکرت بھاشا میں لکھنے اور سپلیمنٹ بنانے میں کافی دلچسپی لی۔ نیز شریمان دیگر صاحب، کا مجموعاً جنہوں نے راگنیا استوتی کا دوسرا ایڈیشن اور شارکا استوتی کا نیا ایڈیشن جو کہ عنقریب ناظرین کی سیوا میں پیش کیا جائے گا۔ ہر دو رسالوں کا ایڈیشن تیار کروانے پر قلمی امداد دینے کا وعدہ فرمایا ہے۔ جن میں ہر ایک سنسکرت اشلوک کا ارتھ کشمیری غزل میں خاطر خواہ بنانے کی کوشش فرمائیں گے شائقین اور عقیدت مند اصحاب شارکا استوتی کا شوق سے انتظار کریں۔

# پرارتھنا

آشا ہے۔ کہ پریمی بھگت سوامی جی کی استوتی جگت امبا کے چرنوں کو میں گاین کرکے لابھ اٹھا دیں گے۔

راقم: نیلکنٹھ وانچو۔ بلیل لنگر۔

# استوتی بزبان کشمیری

از قلم شری مان دلگیر صاحب

۱ زمین ہند چھ ولہ یاری
۲ سرشٹھ تارہ ون تہ دشٹ مارہ ون ژی چھک
۳ برہمہ رشں تہ دیوتا ہرشس گیمرت
۴ دیشنو وربرڈھ کن دلنس چھک پوان
۵ آشا چھ کرکھ سنکرٹہ موچین
۶ شاپو بل ہنو تہ پاپو تل وت
۷ چانی اپئے پز شرناگت چھ اس وین
۸ بوکو نیئ تھپ تھپ باگیہ ہنن
۹ زیچ نظرہ ہیتھ تہ وچھ اسہ کاہنہ تتھ پیٹھ
۱۰ ونتہ ہنہ دہہ سدہ بوتھ شودہ ہنہ
۱۱ کیتھ کیا چھہ کرکھے زیچ نظرا
۱۲ اسن میلیچھن تھاؤ تہ سون کالہ بھیہ
۱۳ بوز بلہ وزہ ملہ ترہیٹھ ہی اپئے ہتہ ہو
۱۴ پتھ بروہنہ کاہنہ چھونہ اسہ چاہنہ وریئ
۱۵ چھونہ ڈیچہ دل۔ گیر کرمت چھہ سمین

جگت امبا کرتہ وین یاری
ژی چھک بابا داری۔ مذکورہ
ترژھ جوت پھٹے ژواباری مذکورہ
رودرہ روپ چھک ژہ سمہاری مذکورہ
آرت توپیے آی ساری مذکورہ
ژھل گیوند موہ اندھکاری ،،
بل کیازہ وبل ناداری مذکورہ
اسہ پیہ کرسناواری ،،
رزپچہ گاہ تھاہ جاریٔ ،،
نتہ کھتہ ننرہ لاچاری مذکورہ
نتھی گڑھو ادھکاری ،،
تیتھ زہ روزہ ہن ہتنکاری ،،
نلہ گڑہن ہتیاری ،،
کس ستا کوہ ولہ زاری ،،
تھاؤ تہ ہنن سمرن لاری ،،

۱۶ ڈُھکھ یمِ ہُل اُچھر تمِ ہہاوُ ناوُتم
یہ چھم سدسد تہ تم ساوُت تھاوُتم

۱۷ چھ یمِ پانچیُے اُچھر اَیکھن چھنہ زیاد
گوڈن اُیی دُور گژھتن بُوم پیٹھ دیاد

۱۸ دویم ٹیی شتھر کانہہ پُورن گژھمنہ
اَسند مارت تریم رُوشُن گژھمنا

۱۹ چھ ژُورم کتھ یہےُ ہمیانس منس منز
رچھم نَیٖن پدلن تل چھوم گوڈرُت کرنز

۲۰ یہ پانچم پران میُن لاران تیُے چھیُ
شوبہ درشُن امرتہ ورشُن کرم ژیُ

۲۱ ژِہ چھوی تو دُمرُت بہ چھس بوزان تسند زار
یمس آسُیٖنہ ونہ نس کیُنہ نش وار

۲۲ خبر چھا کونہ چھک اَدہ میون بوزان
گیم مازو میہ کیہ توہ چھکنہ بوزان

۲۳ ژِہ کتھ سنہ جایہ رُوزِت چھک یمِ کُن فیر
یہ چھوس سنتاپ سیٖت دُودہ ٹرت میہ کرزیر

۲۴ یہ بدُ ویُے چھوس غرِہ نش کُن ژیر واتن
ژِہ میتہ ہشر اوُتم میہ کُون ساتن

۲۵ ژِہ نش واتنہ گژھان چھونہ کہاہ تہ محرُوم
پنتُ اتھ ڈالتم چھوس نا بہ معصُوم

۲۶ میہ سنجت وانیہ نیٖنہ کہنہ تھوُم ہَہ
دِتم درشُن تہ اَدہ بیہ کہنہ گژھم نہ

۲۷ پراگندہ چھسُے چالِش برس تل
دِلک مشکل بھوانی کر تہ میہ حل

۲۸ دیا درشٹی ژِہ کر تم ہی ہو بھوانی
ژِہ چھک نا آسِہ ون تریلوک ثانی

۲۹ شرن بوآس ژی نش دِم ستک ہوش
کران چھوی نجت زاری <u>نیندہ پرگوش</u> / بہاوُتم گوس

۳۰ تُوتا چانی یہ کنز نہا ونکس دِن
دیاسے چانِ ژِہ کِن ہیمان گیے ان

تخفیف و (نوٹ) راقم نے شرمان پر کاش جو کی استوتی میں سے چند مصرعوں کی ترمیم کی ہے۔ آشا ہے۔ مصنف صاحب معاف رکھیں ٭

# استوتی بزبان کشمیری

مہ زاری کن ژہ تھاوتم ہی بھوانی
ژہ دیوی سروندے شیرس پہ پادن
چھ چنچل من بہ گومت کیو ژہ کالہ
دوای درد دیوی چھک ژہ پانے
ژہ نے وادس ہم وانگ چھمہ کنہ بات
بہ چھوس چانس برس تل ہوکن سند پیٹھ
ژہ بش بس بولہ اش تراوہ دار دارے
ستن بوزن ہنری چھک آدہ شکتی
سوری ہس ناد چونوی گڈ دیتی نت
بہ چھوس اُن زین منز گرتھ گتہ دور
بہ چھوس پیو مُت بیتھر اتھ رگ کر کھنا
ہم رٹ داما نہ چونوی پتن وانسے
ہمت کُھنہ منز تھاکر گڈ دِسے نا
مہ کرسے رات راتس ویلہ لے زار
قلم تل کرمہ لیکھا میٹن تو لیخ

ژہ رستوی رچھ ون کا تھ چھمہ ثانی
ژہ دیوی گوشس تھاوتم فریادن
بچھن مشکل ایوان دریٹ یمہ حالہ
علیمن ہنر میاطت چھم بہانے
دس مہ راگ، چونوی ووہ اتے رات
ہم چھم نا چان ژھٹ لقمہ سنہاہ پیٹھ۔
تمس چھک پان ماون بردتھ زارے
شرن آمت چھوئے ون دِم بہ شکتی
شو گژھ نا شیوہ نوکس کیا چھ بڈ گنتھ
دِتم شادی کوہن طاقت اچھن نور
ہم وک درشن شوبہ درشن کر کھنا
ژہ رستوی چھوئس نہ لاران پتہ کھنے
چھلے دودہ کھور ژرن امرت چمپیا
بہ چھوس نا بخت چونوی گژھ تہ بیدار
للاٹس منی ژہ ہنکارک اچھر لیخ

राज्ञ्या : स्तोत्र मिदं पुण्यं
यः पठेद् भक्तिमान् नरः ।
नित्यं देव्याः प्रसादेन
शिव सायुज्य माप्नुयात् ॥ ८ ॥

رٲگنیا ستوترم یدم پُنیم یہ پٔٹھت بخت ہانٛرہ
نِتیم دیویا پرسا شیوہ سایوجم آوانیٛات

इति श्री जगदम्बा स्तुती राजानक
विद्याधर विरचिता
तत्यादपद्मा नुजीविना खर जाति
महादेवजीवेन
काश्मीरिक भाषया ऽ नुवादी कृता
शुभदा ऽ स्तु ॥

॥

भेरी: सदैव हि दीप्त विचित्रवाग्भि
गायंति यां भगवती पटिवादिनीभि: ।
विद्याधरा हि पुलकांकितविग्रहा: सा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१६॥

میرو سدے وہیہ درشو وچیتر واکھی — گاینت یام بھگوتم پرہ وادنی بے
ودیادھرا ہہ پولہ کانکتہ وگرہا — راگنی سدا بھگوتی یوہ تو پرسنا
وژہ نو کمو کمو کن سیتارہ نی پیٹھ — نت یس سہیرہ پربنہ چن گوڈہنے منتر
ودھیادھری چھ گیوہ ون رو ہرشہ سعنی — نت نبتنم پرسن سُئی راگیا بھوانی

राज्ञीं सदा भगवतीं मनसा स्मरामि
राज्ञीं सदा भगवतीं वचसा गृणामि ।
राज्ञीं सदा भगवतीं शिरसा नमामि
राज्ञीं सदा भगवतीं शरणं प्रपद्ये ॥१७॥

راگنیم سدا بھگوتم منہ ساشمرا مے — راگنیم سدا بھگوتم وژہ ساگرنا مے
راگنیم سدا بھگوتم شرسا نما مے — راگنیم سدا بھگوتم تشرنم پرپدیے
نت راگنیا بھگوتی منہ کن سودران چھوس — نت راگنیا بھگوتی ژوہ کن زیان چھوس
نت راگنیا بھگوتی کلہ کن نمان چھوس — نت راگنیا بھگوتی گوہرت شرن چھوس

या कृत्यपंचकनिभालनलालसैवै:
देहस्थिते निखिलवेद्यगणापि शश्वत् ।
सा त्वधुना परप्रमातृपदं विशन्ती
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१४॥

یا کرت پنچکہ نبالنہ لا لسے تے
سانتر درتا پرہ پرماترہ پدم وشنتی
یم تن چھ پنچہ کرتہ کس لگیت ویرششں
یتھ آسہ ون تہ پرہ پرماترہ پدس اترہ ون

سن درشتے نہ کھلہ ویدہ گنا پتھے شت
راگنی سدا بھگوتی بوہ تُہ پرسنا
منشر پرتھ کینے پرنت کُن منشر پچھ وچھان تم
نت نبتم پرسن شچی راگنیا بھوانی

या तुर्यात्मनि पदे परमामृताब्धौ
स्वातंत्र्यशक्तिलहरीव बहिः सरन्ती ।
संलीयते स्वरसतः स्वपदे सभावा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१५॥

یا تُرا تھ سن پدے پرما مرتا بدو
سملی یتی شور بسنہ پدیے شوبادا
یوسہ پان پانہ پنہ تھانہ وتھان بتھے پیٹھ
سوری ہتن بیہ گژھان ملیت تُوی پھیی

سواتنترہ شکت لہرا یوہ بہی سرتی
راگنی سدا بھگوتی بوہ تُو پرسنا
یتھ امرتہ سمندرہ منزہ وتھ ترنگا
نت نبتم پرسن شچی راگنیا بھوانی

चैतन्यपूरितसमस्तजगद्विचित्रा
मातः प्रमेयपरिमाणतया चकास्ति ।
या पूर्णहन्त्यहमिति स्वपदाधिरूढा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१३॥

ژٕ یُے تیٚلیہ پوٗرتٕ سمستہ جگتِ وِچترا
ماتر پرمی یہ پرِہ مانٕ تیا ژٕ کاستی
یا پوٗرنہ ہنتھم یتے سُپدادِہ روٗڑا
راگنی سدا بھگوتی بوٗہ توٗپرسنّا
ساروٗی یہ ژیتنہ جگت نانا پرکاری
ژاں ژارہ وٗن تہ ژانی تریہ سیت چھُ شوٗبان
یُوسہ پوٗرنہ دزژھ اہمہ کنٕ نٔنِس پدس بیٹھ
نت نلتنم پرسن سُعی راگنیا بھوانی

या चित् क्रमाक्रमतया प्रविभाति नित्या
स्वातंत्र्यशक्तिरमला गतभेदभावा ।
स्वात्मस्वरूप सुविमर्शपरैः सुगम्या
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१४॥

یا ژت کرما کرمہ تیٚا پرٕ دِہ باتِ نیتیا
سانتنترہ شکتھِ ژ اَمہ لاگتہ بید باوا
سوا تمنہ سوٗروٗپ سوٗمرشس پری ژہ گمیا
راگنی سدا بھگوتی بوٗہ توٗپرسنّا
یُوسہ چیت شکت کرمہ اکرمہ کنٕ باسہ ولن تارٕ
سوٗتنترہ بادہ نرمل بنہ بادہ رستوٗی
لبنیٔ تمن یِم کراں چھی آتمہ ژنستن
نت نلتنم پرسن سُعی راگنیا بھوانی

हंसस्थिता सकलशब्दमयी भवानी
वाग्वादिनी हृदयपुष्करवासिनी या ।
हंसीव हंस रजनीप्रवर द हृ नेत्रा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥ १० ॥

ہمسس تھتا سکلہ شبدہ مئی بھوانی
ڈاگ وادنی ہردہ پہ پوشکرہ ذاربیا
ہمسیوہ ہمس رجنی شوُرہ دہن نیترا
راگنی سدا بھگوتی بوہ توُپرسننا

ہمسس ٹھہت بھگوتی یُس شبدہ ریپ
کنہہ کرہ وِنی تہ نژہ وِنی سرت کمکیٹی منز
زن ہمسنی سِریہ چندرمہ اگنہ نیترڈ
نت نبتنم پرسن شحی راگنیا بھوانی

या सोमसूर्यवडवा सततं स्मरन्ती
मूलाश्रया नडिदिवाऽऽदि स्थिरन्त्वमीडया ।
मध्यास्थिता सकलनाडिसमूहपूर्णा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥ ११ ॥

یا سوُم سوُرپہ ڈپہ شاستم سمرنتی
مُولاشریا تنڈت یوا ڈدہ تہ ندرم ایڈیا
مدہستھتا سکلہ ناڑہ سموہہ پوُرنا
راگنی سدا بھگوتی بوہ توُپرسننا

یُس موُلہ دارہ پیٹھ سدا سِریہ چندرہ ریپ
فیران چھ زن ڈزہ ملا برہمہ رندرسیٹی تان
ناڑی کھلس یُس بہت منز اگ چھ پوُرن
نت نبتنم پرسن شحی راگنیا بھوانی

यत्पाद पंकज रजः कणज्ज प्रसादा
योगीश्वरै विगतकल्मषमानसैस्तु ।
प्राप्तं पदं जननि विनाप्यहरं परं सा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥६॥

یت پادہ پنکزہ رزہ کنہ زہ پرسادات ‖ یوگی شوریے دِگتہ کلمشِ مانسئ تت
پرافتھم پدم زنن ونا شِس ہرم پرم سا ‖ راگنی سدا بھگوتی بوہ تو پرسنا
یوگی شترو یسندیے تلہ پدہ ملہ سیتا ‖ گالت ہین منک مل پر ووک پرم وام
یوہ کن ہتن اوہ زھنوی زتہ مرنہ بندان ‖ نت نلتھم پرسن سعی راگنیا بھوانی

यत्पाद पंकज रजांसि मनोमलानि
संमार्जयन्ति शिव विष्णु विरिंचि देवैः । देवाः
तस्याम्य पादकमलौः प्रणतानि माता
राज्ञी सदा भगवती भवतु प्रसन्ना ॥७॥

یت پادہ پنکزہ رزام سن منو ملانی ‖ سہم مارزینت شوہ وشنو ورنزہ دیوی
ہرگیان پش زہستنو پرنہ تان ماتا ‖ راگنی سدا بھگوتی بوہ تو پرسنا
یمسند زرن شیو وشن برہاتہ زہاران ‖ پاچھاتہ زمنہ نوہستی تسنی نمان چھی
یمسنز بدن ہنز گرد من مل چھ کاسان ‖ نت نلتھم پرسن سعی راگنیا بھوانی

दुःखार्णवे हि पतितं शरणागतं या
स्वीकृत्य सा नयति धाम परं दयाब्धिः ।
विष्णुर्गजेन्द्रमिव भीतभयापहर्त्री
राज्ञी सदा भगवती भवतु प्रसन्ना ॥४॥

دکھار نوے ہیر پیت تم شرناگتم یا
ژود رہت سایت دام پرم دیا بدے
دشتور گزندرم یوہ بیت بیا پہ ہر تمری
راگنی سدا بھگوتی بوہ تو پرسنا
شرناگتن چھ یوسہ دیا ساگر بھوانی
دوکھ ساگرہ منترہ کڈت گمکنی دوانی
بیہ منترہ رچھان ییتھ رچھوی نارائن ہست
نت نتم پرسن سعی راگنیا بھوانی

यस्या विचित्रमखिलं हि जगत्प्रपंचं
अन्तो विलीनमपि सृष्टिविसर्गरूपात् ।
आविर्भवत्यविरतं चिदचित्स्वभावं
राज्ञी सदा भगवती भवतु प्रसन्ना ॥५॥

یسیا وچترم اکھلم ہیہ جگت پرپنچم
لگھیو ولینم اپ سرشٹہ وسرشٹہ رویات
آدر بوہ بت ودعم نرت اذرت سو بادم
راگنی سدا بھگوتی بوہ تو پرسنا
زنگم تہ تھاور جگت ناناپہ کاری
ادت پت تہ بیہ پہ لبہ ریہ کن نت مس منتر
لین استھی بیہ تتی نون نیرہ دن چھوی
نت نتنم پرسن سعی راگنیا بھوانی

ॐ

ॐ श्रीगणेशाय नमः ॥

विश्वेश्वरी निखिल देव महर्षि पूज्या
सिंहासना त्रिनयना भुजगोपवीता ।
शंखाम्बुजा स्वमृतकुम्भक पंच शाखा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१॥

وِشی شری نہ کھِلہ دیوہ مہرشس پُوجیا
شنکھام بُوزا تھِرِتھہ کمبکہ پنچہ شاکھا

سمہاسنا ترِہ نیترا بُوزہ گُوپہ ویتا
راگنی سدا بھگوتی بوہ تُو پرسنتا

جگت ایشوری ہمیس سارِ دیو مہرشس ہتھہ پُوزان
اتھِہ چھُس کمرک امرت نوٹ بیٹھ شنکھ تہ پھوش

سمہاسنس پیٹھ بہت ترِہ نیتر سرف مال
نت اُبتنم پرسن ہتی راگنیا بھوانی

# تمہید

اس مختصر رسالے میں سری سوامی ودیدھیا دھر جی مہاراج کے قلم گوہر رقم سے وہ استتہ درج کی جاتی ہے۔ جو انہوں نے اپنے بھگتی بھاؤ کے زیرِ اثر راگنیا بھگوتی کی شان میں اس وقت تحریر فرمائی تھی۔ جب کہ وہ تولہ مولہ میں قیام پذیر تھے۔

سوامی جی مہاراج کا ہر ایک اشلوک سنسکرت الفاظ میں لکھنے کے بعد اُردو حروف میں بھی درج کیا گیا ہے۔ تاکہ جو اصحاب سنسکرت بھاشا سے ناآشنا ہیں۔ اُردو ہی پڑھ کر اس سے لطف اندوز ہو جائیں۔

ہمارا ارادہ تھا۔ کہ ہر اشلوک کا ترجمہ کشمیری زبان میں خاطر خواہ طور پر کیا جائے۔ لیکن چونکہ سوامی جی مہاراج نے ایک ایک لفظ میں اس قدر معنی بھر دئے ہیں۔ کہ گویا دریا کو کوزے میں بند کر دیا ہے۔ اس لئے فی الحال ایسا کرنا ناممکن نظر آیا۔ شائقین کے شوقِ انتظار اور بے تابی کو مدِ نظر رکھتے ہوئے اس دفعہ فقط پنڈت مہادیو جو صاحب کھر کا لفظی ترجمہ پیش کیا جاتا ہے۔ جنہوں نے خاص خاص پُر معنی سنسکرت کے الفاظ میں کوئی تبدیلی نہیں کی ہے۔ بلکہ صرف تا اُن کے لحاظ سے سوامی جی کے مطالب کو کسی حد تک ادا کرنے کی کوشش فرمائی ہے۔

(راقم)

کتبہ شام لال کاشی ناتھ

ॐ

# شری راگنیا استوتی

مُصنّفہ

## شری سوامی ویدھیادھرجی مہاراج

ترجمہ بزبان کشمیری

از

شریمان پنڈت مہادیو جو کھرپواری رتنی پورہ

جس کو

راقم نے بحث جنوں کے شردھا بڑھانے اور لابھ حاصل کرنے کے لئے۔ کشمیر پرتاپ سٹیم پریس میں چھپایا! راقم نیلہ کنٹھ وانچو

ملنے کا پتہ:- سٹار میڈیکل ہال حبہ کدل سرینگر

अथ

# भवानीसहस्रनाम-

प्रारम्भः ।

श्रीगणेशाय नमः ॥ ॥ओं नमो भग-
वत्यै ॥ ओं नमो भवान्यै ॥ ॐ शंखारि
शूलशरचापकरां त्रिनेत्रां तिग्मेतरांशक-
लया विलसत्किरीटाम् ॥ सिंहस्थिताम-
सुरसिद्धनुतां च दुर्गां दुर्गानिभां दुरितदुः-
खहरां नमामि ॥१॥ ॐ अकुलकुलपतंती
चक्रमध्ये स्फुरंती मधुरमधु पिबंती कंट-

भ० १ कान्भक्षयंती ॥ दुरितमपहरंती साधका-
न्पोषयंती जयति जगति देवी सुंदरी
क्रीडयंती ॥ २ ॥ चतुर्भुजामेकवक्त्रां पूर्णे-
न्दुवदनप्रभाम् ॥ खड्गशक्तिधरां देवीं वर-
दाभयपाणिकाम् ॥ ३ ॥ प्रेतसंस्थां
महारौद्रीं भुजगेनोपवीतिनीम् ॥ भवानीं
कालसंहारबद्धमुद्राविभूषिताम् ॥ ४ ॥

स० १

जगत्स्थितिकरीं ब्रह्मविष्णुरुद्रादिभिः सु-
रैः॥स्तुतां तां परमेशानीं नौम्यहं विघ्नहा-
रिणीम्॥५॥ॐनमो भवान्यै॥ॐकैलास-
शिखरे रम्ये देवदेवं महेश्वरम्॥ ध्यानोप-
स्तमासीनं प्रसन्नमुखपंकजम्॥६॥ सुरा-
सुरशिरोरत्नरंजितांघ्रियुगं प्रभुम्॥ प्रण-
म्य शिरसा नंदी बद्धांजलिरभाषत ॥७॥

श्रीनंदिकेश्वर उवाच ॥ ॥ देवदेव जगन्ना-
थ संशयोऽस्ति महान्मम॥ रहस्यमेकमि-
च्छामि प्रष्टुं त्वां भक्तवत्सल ॥८॥ देवता-
यास्त्वया कस्याः स्तोत्रमेतद्दिवानिशम्॥
पठ्यतेऽविरतं नाथ त्वत्तः किमपरं महत्
॥९॥इति पृष्टस्तदा देवो नंदिकेन जगद्गुरुः
प्रोवाच भगवानेको विकसन्नेत्रपंकजः॥

॥ १० ॥ श्रीभगवानुवाच ॥ ॥ साधु
साधु गणश्रेष्ठ पृष्टवानसि मां च यत् ॥
स्कंदस्यापि च यद्गोप्यं रहस्यं कथयामि
तत् ॥ ११ ॥ पुरा कल्पक्षये लोकान् सिसृक्षु-
र्मूढचेतसः ॥ गुणत्रयमयी शक्तिर्मूलप्रकृ-
तिसंज्ञिता ॥ १२ ॥ तस्यामहं समुत्पन्न-
स्तत्वैस्तैर्महदादिभिः ॥ चेतनेति ततः

शक्तिर्मां काप्यालिंग्य तस्थुषी ॥ १३ ॥
हेतुः संकल्पजालस्य मनोऽधिष्ठायिनी
शुभा ॥ इच्छेति परमा शक्तिरुन्मिमील
ततः परम् ॥ १४ ॥ ततो वागिति विख्याता
शक्तिःशब्दमयी पुरा ॥ प्रादुरासीज्जगन्मा-
ता वेदमाता सरस्वती ॥ १५ ॥ ब्राह्मी च
वैष्णवी सैंद्री कौमारी पार्वती शिवा ॥

सिद्धिदा बुद्धिदा शांता सर्वमंगलदायिनी
॥ १६ ॥ तयैतत्सृज्यते विश्वमनाधारं च
धार्यते ॥ तयैतत्पाल्यते सर्वं तस्यामेव
प्रलीयते ॥ १७॥ अर्चिता प्रणता ध्याता
सर्वभावविनिश्चितैः ॥ आराधिता स्तुता
सैव सर्वसिद्धिप्रदायिनी॥ १८ ॥तस्या अ-
नुग्रहादेव तामेव स्तुतवानहम् ॥सहस्रैर्ना-

मामिदंऽयैस्त्रैलोक्यप्राणिपूजितैः ॥ १९ ॥
स्तवेनानेन संतुष्टा मामेव प्रविवेश सा ॥ त-
दाश्रय मया प्राप्तमैश्वरं पदमुत्तमम् २० ॥
तत्प्रभावान्मया सृष्टं जगदेतच्चराचरम् ॥
ससुरासुरगंधर्वं यक्षराक्षसमानवम् ॥ २१ ॥
सपन्नगं साब्धिकं च सशैलवनकाननम् ॥
सराशिग्रहनक्षत्रं पंचभूतगुणान्वितम् ॥

॥ २२ ॥ नंदिन्नामसहस्रेण स्तवेनानेन स-
र्वदा ॥ स्तुवे परापरां शक्तिं ममानुग्रहका-
रिणीम् ॥ २३ ॥ इत्युक्त्वोपरतं देवं चराच-
रगुरुं विभुम् ॥ प्रणम्य शिरसा नंदी प्रोवाच
परमेश्वरम् ॥ २४ ॥ श्रीनंदिकेश्वर
उवाच ॥ भगवन्देवदेवेश लोकनाथ जग-
त्पते ॥ भक्तोऽस्मि तव दासोऽस्मि प्रसादः

क्रियतां मयि ॥ २५ ॥ देव्याः स्तवमिमं
पुण्यं दुर्लभं यत्सुरैरपि ॥ श्रोतुमिच्छाम्य-
हं देव प्रभावमपि चास्य तु ॥ २६ ॥
श्रीभगवानुवाच ॥ ॥ शृणु नंदिन्महाभा-
ग स्तवराजमिमं शुभम् ॥ सहस्रैर्नामभि-
र्दिव्यैः सिद्धिदं सुखमोक्षदम् ॥ २७ ॥ शु-
चिभिः प्रातरुत्थाय पठितव्यं समाहितैः ॥

त्रिकालं श्रद्धया युक्तैर्नातः परतरः स्त-
वः ॥ २८ ॥ अथ न्यासः ॥ ॥ ॐ ए-
कवीरायै अंगुष्ठाभ्यां नमः ॥ ॐ महामा-
यायै तर्जनीभ्यां नमः ॥ ॐ पार्वत्यै मध्य-
माभ्यां नमः ॥ ॐ गिरिशप्रियायै अना-
मिकाभ्यां नमः ॥ ॐ गौर्यै कनिष्ठिका-
भ्यां नमः ॥ ॐ करालिन्यै करतलकरपृ-

राभिवन्द्यामम्भोजपाशसृणिरक्तकपा-
लहस्ताम् ॥ रक्ताङ्गरागवसनाभरणां
त्रिनेत्रां ध्यायेच्छिवस्यवनितां मदविह्व-
लांगीम् ॥ ॐबालार्कमण्डलाभासां चतु-
र्बाहुं त्रिलोचनाम् ॥ पाशांकुशशरं चापं
धारयंतीं शिवां भजे ॥ ॥ ॐ श्रीईश्वर
उवाच ॥ ॥ ॐमहाविद्याजगन्माता महा-

लक्ष्मीः शिवाप्रिया ॥ विष्णुमाया शुभा
शांता सिद्धा सिद्धसरस्वती ॥ १ ॥ क्षमा
कांतिःप्रभा ज्योत्स्ना पार्वती सर्वमंगला
हिंगुला चंडिका दांता पद्मा लक्ष्मीर्हरिप्रि
या ॥२॥ त्रिपुरा नंदिनी नंदा सुनंदा सुरवं-
दिता ॥ यज्ञविद्या महामाया वेदमाता
सुधा धृतिः ॥३॥ प्रीतिः प्रथा पसिद्धा च

मृडानी विंध्यवासिनी॥ सिद्धविद्या महा
शक्तिः पृथ्वी नारदसेविता॥ ४ ॥ पुरुहूत
प्रिया कांता कामिनी पद्मलोचना॥ प्रह्ला
दिनी महामाता दुर्गा दुर्गतिनाशिनी
॥ ५ ॥ ज्वालामुखी सुगोत्रा च ज्योतिः
कुमुदहासिनी॥दुर्गमा दुर्लभा विद्या स्वर्ग
तिः पुरवासिनी॥ ६ ॥अपर्णा शांबरी माया

मदिरा मृदुहासिनी ॥ कुलवागीश्वरी नि-
त्या नित्यक्लिन्ना कृशोदरी ॥७॥ कामेश्व-
रीच नीला च भीरुंडा वह्निवासिनी॥लंबो-
दरी महाकाली विद्या विद्येश्वरी तथा॥८॥
नरेश्वरी च सत्या च सर्वसौभाग्यवर्धिनी॥
संकर्षणी नारासिंही वैष्णवी च महोदरी
॥९॥ कात्यायनी च चंपा च सर्वसंपत्ति-

कारिणी ॥ नारायणी महानिद्रा योगनि-
द्रा प्रभावती ॥ १० ॥ प्रज्ञापारमिता प्रज्ञा
तारा मधुमती मधु ॥ क्षीरार्णवसुधाहारा
कालिका सिंहवाहना ॥ ११ ॥ ॐकारा
च सुधाकारा चेतना कोपना कृतिः ॥
अर्धबिंदुधराधारा विश्वमाता कलावती
॥ १२ ॥ पद्मावती सुवस्त्रा च प्रबुद्धा चसर-

स्वती ॥ कुंडासना जगद्धात्री बुद्धमाता
जिनेश्वरी ॥ १३ ॥ जिनमाता जिनेंद्रा च
शारदा हंसवाहना ॥ राज्यलक्ष्मीर्वषट्कारा
सुधाकारा सुधोत्सुका ॥१४॥ राजनीति-
स्त्रयीवार्ता दंडनीतिः क्रियावती ॥ सद्भू-
तिस्तारिणी श्रद्धा सद्गतिः सत्परायणा
॥ १५ ॥ सिंधुर्मंदाकिनी गंगा यमुना च

सरस्वती ॥ गोदावरी विपाशा च कावेरी
च शतह्रदा ॥ १६ ॥ सरयूश्चंद्रभागा च
कौशिकी गंडकी शुचिः॥ नर्मदा कर्मनाशा
च चर्मण्वत्यथ वेदिका ॥ १७ ॥ वेत्रवती
वितस्ता च वरदा नरवाहना ॥ सती पति-
व्रता साध्वी सुचक्षुःकुंडवासिनी ॥ १८ ॥
एकचक्षुः सहस्राक्षी सुश्रोणिर्भगमालि-

नी ॥ सेनाश्रोणि: पताका च सुव्यूहा युद्ध-
कांक्षिणी ॥ १९ ॥ पताकिनी दया रंभा
विपंची पंचमप्रिया ॥ परापरकला कांता
त्रिशक्तिर्मोक्षदायिनी ॥ २० ॥ ऐंद्री माहेश्व-
री ब्राह्मी कौमारी कूलवासिनी ॥ इच्छाभ-
गवती शक्तिः कामधेनुः कृपावती ॥ २१ ॥
वज्रयुधा वज्राहस्ता चंडी चण्डपराक्रमा ॥

गौरी सुवर्णवर्णा च स्थितिसंहारकारिणी
॥ २२ ॥ एकानेका महेज्या च शतबाहु-
र्महाभुजा ॥ भुजंगभूषणा भूषा षट्चक्र-
क्रमवासिनी॥२३॥ षट्चक्रभेदिनी श्या-
मा कायस्था कायवर्जिता ॥ सुस्मिता सु-
मुखी क्षामा मूलप्रकृतिरीश्वरी॥२४॥ अ-
जा च बहुवर्णा च पुरुषार्थप्रवर्तिनी॥रक्ता

नीला सिताश्यामा कृष्णा पीता च कर्बुरा
॥२५॥ क्षुधा तृष्णा जरा वृद्धा तरुणी क-
रुणालया ॥ कला काष्ठा मुहूर्ता च निमि-
षा कालरूपिणी ॥ २६ ॥ सुवर्णरशना
नासा चक्षुःस्पर्शवती रसा ॥ गंधप्रिया सु-
गंधा च सुस्पर्शा च मनोगतिः ॥ २७ ॥
मृगनाभिर्मृगाक्षी च कर्पूरामोदधारिणी॥

जया शाकंभरी शिवा ॥ ३४ ॥ विजया
च जयंती च सुस्तनी शत्रुनाशिनी॥ अंत-
र्वत्नी वेदशक्तिर्वरदा वरधारिणी ॥ ३५॥
शीतला च सुशीला च बालग्रहविनाशि-
नी ॥ कौमारी च सुपर्वा च कामाख्या
कामवंदिता ॥ ३६ ॥ जालंधरधरानंता
कामरूपनिवासिनी ॥ कामबीजवती

सत्यासत्यधर्मपरायणा ॥ ३७॥ स्थूलमा-
र्गस्थिता सूक्ष्मा सूक्ष्मबुद्धिप्रबोधिनी ॥
षट्कोणा च त्रिकोणा च त्रिनेत्रा त्रिपुरसुंदरी
॥ ३८॥ वृषाप्रिया वृषारूढा महिषासुरघा-
तिनी॥शुंभदर्पहरा दीप्ता दीप्तपावकसन्नि-
भा ॥ ३९॥ कपालभूषणा काली कपाल-
मालधारिणी ॥ कपालकुण्डला दीर्घा शि-

स० वदूती घनध्वनि:॥४०॥ सिद्धिदा बुद्धिदा
१४ नित्या सत्यमार्गप्रबोधिनी ॥ कम्बुग्रीवा
वसुमती च्छत्रच्छायाकृतालया ॥ ४१॥
जगद्गर्भा कुण्डलिनी भुजगाकारशायि-
नी॥ प्रोल्लसत्सप्तपद्मा च नाभिनालमृणा-
लिनी ॥ ४२ ॥ मूलाधारा निराकारा १४
वह्निकुण्डकृतालया ॥ वायुकुण्डसुखासी-

ना निराधारा निराश्रया ॥ ४३ ॥ श्वासो-
च्छ्वासगतिर्जीवग्राहिणी वह्निसंश्रया ॥
वल्लीतंतुसमुत्थाना षड्रसास्वादलोलुपा
॥ ४४ ॥ तपस्विनी तपःसिद्धिस्तपसा
सिद्धिदायिनी ॥ तपोनिष्ठा तपोयुक्ता ता-
पसी च तपःप्रिया ॥ ४५ ॥ सप्तधातुम-
यी मूर्तिः सप्तधात्वंतराश्रया ॥ देहपुष्टिर्म-

नःपुष्टिरन्नपुष्टिर्बलोद्भुता ॥ ४६ ॥ ओष-
धिर्वैद्यमाता च द्रव्यशक्तिप्रभाविनी ॥
वैद्या वैद्यचिकित्साच सुपथ्या रोगनाशि-
नी ॥ ४७ ॥ मृगया मृगमांसादा मृगत्वङ्-
मृगलोचना ॥ वागुरा बंधरूपा च बंधरू-
पा वधोद्धुता ॥ ४८ ॥ बंदीबंदिस्तुताकारा-
गारबन्धविमोचिनी ॥ शृंखला खलहा

विद्या दृढबन्धाविमोचिनी ॥ ४९ ॥ अं-
बिका बालिका चांबा स्वक्षा साधुजना-
र्चिता ॥ कौलिकी कुलविद्या च सुकला
कुलपूजिता ॥ ५० ॥ कालचक्रभ्रमिभ्रां-
ता विभ्रामा भ्रमनाशिनी ॥ वात्याली मे-
घमाला च सुवृष्टिः सस्यवर्धिनी ॥ ५१ ॥
अकारा च इकारा च उकारैकाररूपिणी ॥

400

ह्रींकारी बीजरूपा च क्लींकारांबरवासि-
नी ॥ ५२ ॥ सर्वाक्षरमयी शक्तिरक्षरा व-
र्णमालिनी ॥ सिंदूरारुणवर्णा च सिंदूरति-
लकप्रिया ॥ ५३ ॥ वश्या च वश्यबीजा
च लोकवश्यविभाविनी ॥ नृपवश्या नृपैः
सेव्या नृपवश्यकरी प्रिया ॥ ५४ ॥ महि-
षी नृपमान्या च नृमान्या नृपनंदिनी ॥

नृपधर्ममयी धन्या धनधान्यविवर्धिनी
॥ ५५ ॥ चतुर्वर्णमयी मूर्तिश्चतुर्वर्णैश्च पू-
जिता ॥ सर्वधर्ममयी सिद्धिश्चतुराश्रम-
वासिनी ॥ ५६ ॥ ब्राह्मणी क्षत्रिया वैश्या
शूद्रा चावरवर्णजा॥वेदमार्गरता यज्ञा वे-
दिर्विश्वविभाविनी ॥ ५७ ॥ असुशस्त्रम-
यी विद्या वरशस्त्रास्त्रधारिणी ॥ सुमेधा

सत्यमेधा च भद्रकाल्यपराजिता ॥५८॥
गायत्री सत्कृतिः संध्या सावित्री त्रिपदा-
श्रया ॥ त्रिसंध्या त्रिपदी धात्री सुपर्वा सा-
मगायनी ॥५९॥ पांचाली बालिका बा-
ला बालक्रीडा सनातनी ॥ गर्भाधारधरा
शून्या गर्भाशयनिवासिनी ॥ ६० ॥ सुरा-
रिघातिनी कृत्या पूजना च तिलोत्तमा ॥



See at page 13 Slo. 36

लज्जा रसवती नंदा भवानी पापनाशिनी
॥ ६१ ॥ पट्टांबरधरा गीतिः सुगीतिर्ज्ञान-
लोचना ॥ सप्तस्वरमयी तंत्री षड्जमध्यम-
धैवता ॥ ६२ ॥ मूर्च्छनाग्रामसंस्थाना मू-
र्च्छासुस्थानवासिनी ॥ अट्टाट्टहासिनी प्रे-
ता प्रेतासननिवासिनी ॥ ६३ ॥ गीतनृ-
त्यप्रिया कामा तुष्टिदा पुष्टिदाक्षया ॥ नि-

ष्ठा सत्यप्रिया प्रज्ञा लोलाक्षी च सुरोत्तमा ॥ ६४ ॥ सविषा ज्वालिनी ज्वाला विश्वमोहार्तिनाशिनी ॥ विषारिर्नागदमनी कुरुकुल्यामृतोद्भवा ॥ ६५ ॥ भूतभीतिहरा रक्षा भूतावेशविनाशिनी ॥ रक्षोघ्नी राक्षसी रात्रिर्दीर्घनिद्रानिवारिणी ॥ ६६ ॥ चंद्रिका चंद्रकांतिश्च सूर्यकांतिर्निशाच-

री ॥ डाकिनी शाकिनी शिष्या हाकिनी
चक्रवाकिनी॥६७॥सिता सितप्रिया स्वं-
गा सकला वनदेवता ॥ गुरुरूपधरा गुर्वी
मृत्युमारी विशारदा ॥ ६८ ॥ महामारी
विनिद्रा च तंद्रा मृत्युविनाशिनी ॥ चंद्रमं-
डलसंकाशा चंद्रमंडलवासिनी॥६९॥अ-
णिमादिगुणोपेता सुस्पृहा कामरूपिणी॥

IJANKI Nath

अ० अष्टासिद्धिप्रदा प्रौढा दुष्टदानवघातिनी ४०
३९ ॥७०॥ अनादिनिधना पुष्टिश्चतुर्बाहुश्च-
तुर्मुखी ॥ चतुःसमुद्रशयना चतुर्वर्गफल-
प्रदा ॥ ७१ ॥ काशपुष्पप्रतीकाशा शरत्कु-
मुदलोचना॥भूता भव्या भविष्या च शैल-
जा शैलवासिनी॥७२॥वाममार्गरता वा- १९
मा शिववामांगवासिनी ॥ वामाचारप्रि-

या तुष्टिर्लोपामुद्रा प्रबोधिनी ॥७३ ॥भू-
तात्मा परमात्मा च भूतभावविभाविनी ॥
मंगला च सुशीला च परमार्थप्रबोधिनी
॥७४ ॥ दक्षिणा दक्षिणामूर्तिः सुदीक्षा च
हरिप्रसूः ॥ योगिनी योगयुक्ता च योगां-
गा ध्यानशालिनी ॥७५ ॥ योगपट्टधरा
मुक्ता मुक्तानां परमागतिः ॥ नारसिंही स-

जन्मा च त्रिवर्गफलदायिनी ॥ ७६ ॥ ध-
र्मदा धनदा चैका कामदा मोक्षदा द्युतिः ॥
साक्षिणी क्षणदा दक्षा मोक्षदा कोटिरूपि-
णी ॥७७॥ ऋतुः कात्यायिनी स्वच्छा सु-
च्छंदा च कविप्रिया ॥ सत्यागमा बहिस्था
च काव्यशक्तिः कवित्वदा ॥७८॥ मीनपु-
त्री सती माता मैनाकभगिनी तडित् ॥ सौ-

दामिनी सुदामा च सुधामा धामशालिनी ॥ ७९ ॥ सौभाग्यदायिनी द्यौश्च सुभगा द्युतिवर्धिनी ॥ श्रीकृत्तिवसना चैव कंकाली कलिनाशिनी ॥ ८० ॥ रक्तबीजवधोद्युक्ता सुतंतुबीजसंततिः ॥ जगज्जीवा जगद्बीजा जगत्त्रयहितैषिणी ॥ ८१ ॥ चामीकररुचिश्चांद्री साक्षाद्या षोडशी कला ॥

यत्तत्पदानुबन्धा च यक्षिणी धनदार्चिता
॥ ८२ ॥ चित्रिणी चित्रमाया च विचित्रा
भुवनेश्वरी ॥ चामुंडा मुंडहस्ता च चंडमुं-
डवधोद्यता ॥ ८३ ॥ अष्टम्येकादशी पूर्णा
नवमी च चतुर्दशी ॥ अमा कलशहस्ता च
पूर्णकुंभपयोधरा ॥ ८४ ॥ अभीरुर्भैरवी
भीरुभीमा त्रिपुरभैरवी ॥ महारुंडा च रौ-

द्री च महाभैरवपूजिता॥८५॥ निर्मुंडा ह-
स्तिनी चंडा करालदशनानना॥ कराला
विकराला च घोरा घुर्घुरनादिनी॥८६॥
रक्तदंतोर्ध्वकेशी च बन्धूककुसुमारुणा॥
कादंबिनीपटा सा च काश्मीरी कुंकुमाप्रि-
या॥८७॥क्षांतिर्बहुसुवर्णा च रतिर्बहुसुव-
र्णदा॥ मातंगिनी वरारोहा मत्तमातंगगा-

मिनी॥८८॥हंसा हंसगतिर्हंसी हंसोज्ज्व-
लशिरोरुहा॥पूर्णचंद्रमुखी श्यामा स्मिता-
स्या श्याम कुण्डला॥८९॥मषी च लेखनी
लेखा सुलेखा लेखकप्रिया॥ शंखिनी शं-
खहस्ता च जलस्था जलदेवता॥ ९० ॥
कुरुक्षेत्रावनिः काशी मथुरा कांच्यवंति-
का॥ अयोध्या द्वारिका माया तीर्थातीर्थ

कराप्रिया ॥ ९१ ॥ त्रिपुष्करा प्रमेया च
कोशस्था कोशवासिनी ॥ कौशिकी तु
कुशावर्ता कौशाम्बी कोशवर्द्धिनी ॥९२॥
कोशदा पद्मकोशाक्षी कुसुंभकुसुमप्रिया ॥
तोतला च तुलाकोटिः कोटस्था कोटरा-
श्रया ॥ ९३॥ स्वयंभूश्च सुरूपा च स्वरू-
पा पुण्यवार्धिनी ॥ तेजस्विनी सुभिक्षा च

बलदा बलदायिनी ॥ १४ ॥ महाकोशी
महावार्ता बुद्धिः सदसदात्मिका ॥ महाग्र-
हहरा सौम्या विशोका शोकनाशिनी
॥ १५ ॥ सात्विकी सत्वसंस्था च राजसी
च रजोवृता ॥ तामसी च तमोयुक्ता गुण-
त्रयविभाविनी ॥ १६ ॥ अव्यक्ता व्यक्त-
रूपा च वेदविद्या च शांभवी ॥ शंकरा क-

लिपनी कल्पा मनः संकल्पसंतातिः ॥ १७॥
सर्वलोकमयी शक्तिः सर्वश्रवणगोचरा ॥
सर्वज्ञानवती वांछा सर्वतत्त्वावबोधिका
॥ १८ ॥ जागृतिश्च सुषुप्तिश्च स्वप्नावस्था
तुरीयका ॥ सत्वरा मंदरा मंदा मदिरा-
मोदधारिणी ॥ १९ ॥ पानभूमिः पानपा-
त्रपानदानकरोद्यता ॥ अघूर्णारुणनेत्रा

च किंचिदव्यक्तभाषिणी ॥ १०० ॥ आ-
शापूरा च दीक्षा च दक्षा दीक्षितपूजिता ॥
नागवल्ली नागकन्या भोगिनी भोगवल्ल-
भा ॥ १ ॥ सर्वशास्त्रमयी विद्या सुस्मृतिर्ध-
र्मवादिनी ॥ श्रुतिस्मृतिधरा ज्येष्ठा श्रेष्ठा
पातालवासिनी ॥ २ ॥ मीमांसा तर्कवि-
द्या च सुभक्तिर्भक्तवत्सला ॥ सुनाभिया-

तना जातिर्गंभीरा भाववर्जिता ॥ ३॥ ना-
गपाशधरा मूर्तिरगाधा नागकुंडला ॥ सु-
चक्रा चक्रमध्यस्था चक्रकोणनिवासि-
नी ॥ ४ ॥ सर्वमंत्रमयी विद्या सर्वमंत्राक्ष-
रावलिः॥मधुस्रवा स्रवंती च भ्रामरी भ्र-
मरालका ॥ ५ ॥ मातृमंडलमध्यस्था मा-
तृमंडलवासिनी ॥ कुमारजननी क्रूरा सु-

मुखी ज्वरनाशिनी ॥ ६ ॥ अतीता विद्यमा-
ना च भाविनी प्रीतिमञ्जरी ॥ सर्वसौख्य-
वती युक्तिराहारपरिणामिनी ॥ ७ ॥ नि-
धाना पञ्चभूतानां भवसागरतारिणी ॥ अ-
क्रूरा च ग्रहवती विग्रहा ग्रहवर्जिता ॥ ८ ॥
रोहिणी भूमिगर्भा च कालभूः कालवर्ति-
नी ॥ कलंकराहिता नारी चतुःषष्ट्यभिधा-

वती ॥ ९ ॥ जीर्णा चजीर्णवस्त्रा च नूतना
१३२
नववल्लभा ॥ अरजा च रतिप्रीतिरतिराग-
विवर्धिनी ॥ ११० ॥ पंचवातगतिर्भिन्ना
पंचश्लेष्माशयाधरा ॥ पंचपित्तवती श-
क्तिः पंचस्थानविभाविनी ॥ ११ ॥ उद-
क्या च वृषस्यंती बहिःप्रस्रवणी त्र्यहा ॥
रजःशुक्रधरा शक्तिर्जरायुर्गर्भधारिणी

॥ १२ ॥ त्रिकालज्ञात्रिलिंगा त्रिमूर्तीस्त्रि-
पुरवासिनी ॥ अरागा शिवतत्वा च काम-
तत्वानुरागिणी ॥ १३ ॥ प्राच्यवाची प्र-
तीची दिगुदीची दिग्विदिग्दिशा ॥ अहंकृ-
तिरहंकारा बालामाया बलिप्रिया ॥ १४ ॥
सुक्सुवा सामधेनी च सुश्रद्धा श्राद्धदेव-
ता ॥ माता मातामही तृप्तिः पितृमाता पि-

तामही ॥ १५ ॥ स्नुषा दौहित्रिणी पुत्री पौ-
त्री नप्त्री शिशुप्रिया ॥ स्तनदा स्तनधारा
च विश्वयोनिः स्तनंधयी ॥ १६ ॥ शिशू-
त्संगधरा दोला दोलाक्रीडाभिनंदिनी ॥
उर्वशी कदलीकेकाविशिखा शिखिवर्ति-
नी ॥ १७ ॥ खट्वांगधारिणी खट्वा बाणपुं-
खानुवर्तिनी ॥ लक्ष्यप्राप्तिकरा लक्ष्याल-

क्ष्या च शुभलक्षणा ॥ १८ ॥ वर्तिनी सु-
पथाचारापरिखा च खनिर्वृतिः॥ प्राकार-
वलया वेला मर्यादा च महोदधौ ॥ १९ ॥
पोषिणी शोषिणी शक्तिर्दीर्घकेशी सुलो-
मशा ॥ ललितामांसला तन्वी वेदवेदांग-
धारिणी॥ १२०॥ नरासृकपानमत्ता च न-
रमुण्डास्थिभूषणा ॥ अक्षक्रीडारतिः सारी

सारिका शुकभाषिणी ॥२१॥ शाबरी गा-
रुडीविद्या वारुणी वरुणार्चिता ॥ वाराही
तुंडहस्ताचदंष्ट्रोद्धृतवसुंधरा ॥२२॥ मी-
नमूर्तिधरा मूर्ता वदान्याऽप्रतिमाश्रया ॥
अमूर्ता निधिरूपा च शालिग्रामशिला
शुचिः ॥२३॥ स्मृतिःसंस्काररूपा च सु-
संस्कारा च संस्कृतिः ॥प्राकृता देशभाषा

च गाथा गीतिः प्रहेलिका ॥ २४ ॥ इडा च
पिंगलापिंगा सुषुम्णा सूर्यवाहिनी ॥ शशि-
स्रवा च तालस्था काकिन्यमृतजीविनी
॥ २५ ॥ अणुरूपा बृहद्रूपा लघुरूपा गुरुः
स्थिरा ॥ स्थावरा जंगमा देवी कृतकर्मफ-
लप्रदा ॥ २६ ॥ विषयाक्रांतदेहा च निर्विशे-
षा जितेंद्रिया ॥ विश्वरूपा चिदानंदा पर-

ब्रह्मप्रबोधिनी॥२७॥ निर्विकारा च निर्वै-
रा विरतिःसत्यवर्धिनी ॥पुरुषाज्ञा च भि-
न्ना च क्षांतिः कैवल्यदायिनी॥२८॥ वि-
विक्तसेविनी प्रज्ञा जनयित्री बहुश्रुतिः॥
निरीहा च समस्तैका सर्वलोकैकसेविता
॥२९॥ सेवा सेवाप्रिया सेव्या सेवाफल-
विवर्धिनी॥ कलौ कल्किप्रिया काली दु-

JANKI NATH Koul

ष्टम्लेच्छविनाशिनी ॥ १३० ॥ प्रत्यंचा च
धनुर्यष्टिःखड्गधारा दुरानतिः ॥ अश्वप्लु-
तिश्च वल्गा च सृणिः सन्मृत्युवारणा
॥ ३१ ॥ वीरभूर्वीरमाता च वीरसूर्वीरनं-
दिनी ॥ जयश्रीर्जयदीक्षा च जयदा जय-
वर्धिनी ॥ ३२ ॥ सौभाग्यसुभगाकारा
सर्वसौभाग्यवर्धिनी ॥ क्षेमंकरी सिद्धिरू-

पा सत्कीर्तिः पथिदेवता ॥ ३३ ॥ सर्वती-
र्थमयी मूर्तिः सर्वदेवमयी प्रभा ॥ सर्वसि-
द्धिप्रदा शक्तिः सर्वमंगलमंगला ॥ ३४ ॥
पुण्यं सहस्रनामेदं शिवायाः शिवभाषित-
म् ॥ यः पठेत्प्रातरुत्थाय शुचिर्भूत्वा समा-
हितः ॥ ३५ ॥ यश्चापि शृणुयान्नित्यं नरो
निश्चलमानसः ॥ एककालं द्विकालं वात्रि-

म० कालं श्रद्धयान्वितः॥ ३६ ॥सर्वदुःखवि- स०
३० निर्मुक्तो धनधान्यसमन्वितः ॥ तेजस्वी
बलवाञ्छूरः शोकरोगविवर्जितः ॥३७॥
यशस्वी कीर्तिमान् ध""यः सुभगो लोकपू-
जितः॥ रूपवान् गुणसंपन्नः प्रभावीर्य-
समन्वितः॥ ३८ ॥ श्रेयांसि लभते नित्यं ३०
निश्चलां च शुभां श्रियम् ॥ सर्वपापवि-

निर्मुक्तो लोभक्रोधविवर्जितः ॥ ३९ ॥
नित्यं बंधुसुतैर्दारैः पुत्रपौत्रैर्महोत्सवैः ॥ नं-
दितः सेवितो भृत्यैर्बहुभिः शुचिमानसैः
॥ १४० ॥ विद्यानां पारगो विप्रः क्षत्रियो
विजयी रणे ॥ वैश्यस्तु धनलाभाढ्यः शूद्रः
सुखमवाप्नुयात् ॥ ४१ ॥ पुत्रार्थी लभते पुत्रं
धनार्थी विपुलं धनम् ॥ इच्छाकामं तु का-

माथीं धर्मार्थी धर्ममक्षयम् ॥ ४२ ॥ क-
न्यार्थी लभते कन्यां रूपशीलगुणान्वि-
ताम् ॥ क्षेत्रं च बहुसस्यं स्याद्गावस्तु बहुदु-
ग्धदाः ॥ ४३ ॥ नाशुभं नापदस्तस्य नभयं
नृपशत्रुतः ॥ जायते नाशुभाद्बुद्धिर्लभते
कुलधुर्यताम् ॥ ४४ ॥ न बाधंते ग्रहास्त-
स्य न रक्षांसि नपन्नगाः ॥ न पिशाचा न

डाकिन्यो भूतव्यंतरजंबुकाः ॥ ४५ ॥ बाल-
ग्रहाभिभूतानां बालानां शांतिकारकम् ॥
द्वंद्वानां प्रीतिभेदे च मैत्रीकरणमुत्तमम्
॥ ४६ ॥ लोहपाशैर्दृढैर्बद्धो बद्धो वेश्मनि
दुर्गमे ॥ तिष्ठन् शृण्वन् पठन्मर्त्यो मुच्यते
नात्र संशयः ॥ ४७ ॥ न दाराणां न पुत्राणां
न बंधूनां न मित्रजम् ॥ पश्यंति ते न शोकं

हि वियोगं चिरजीविताम् ॥ ४८ ॥ अंध-
स्तु लभतेदृष्टिं चक्षुरोगैर्न बाधते॥ बधिरः
श्रुतिमाप्नोति मूकोवाचं शुभां नरः॥४९॥
पतद्गर्भा च या नारी स्थिरगर्भा प्रजायते॥
स्राविणी बद्धगर्भा च सुखमेव प्रसूयते
॥१५०॥ कुष्ठिनः शीर्णदेहा ये गतकेशन-
खत्वचः॥ पठनाच्छ्रवणाद्वापि दिव्यका-

या भवंति ते ॥ ५१ ॥ ये पठंति सदा मर्त्याः
शुचिष्मंतो जितेंद्रियाः ॥ अपुत्राः प्राप्नुयुः
पुत्राञ्छ्रृण्वंतोऽपि न संशयः ॥ ५२ ॥
महाव्याधिपरिग्रस्तास्तथा ये विविधै-
र्ज्वरैः ॥ भूताभिषंगसंघातैश्चातुर्थिकतृती-
यकैः ॥ ५३ ॥ अन्यैश्च दारुणै रोगैः
पीड्यमानाश्च मानवाः ॥ गतबाधाः

प्रजायंते तैर्मुक्ता नात्र संशयः ॥ ५४ ॥
श्रुतिग्रंथधरो बालो दिव्यवादी कवी-
श्वरः ॥ पठनाच्छ्रवणाद्वापि भवत्येव न
संशयः ॥ ५५ ॥ अष्टम्यां वा चतुर्दश्यां
नवम्यां चैकचेतसः ॥ ये पठंति सदा
मर्त्या न ते वै दुःखभाजनाः ॥ ५६ ॥
नवरात्रं जिताहारो दृढभक्तिर्जितेंद्रियः ॥

चण्डिकायतने विद्वान् शुचिष्मान्मूर्तिस-
न्निधौ ॥५७॥ एकाकी तु शतावृत्त्या पठ-
न्धीरश्च निर्भयः ॥ साक्षाद्भगवती तस्मै
प्रयच्छेदीप्सितं फलम् ॥ ५८ ॥ सिद्ध-
पीठे गिरौ रम्ये सिद्धक्षेत्रे सुरालये ॥
पठनात्साधकस्याशु सिद्धिर्भवति वांछि-
ता ॥ ५९ ॥ दशावर्तं पठेद्यस्तु भूमि-

शायी नरः शुचिः ॥ स्वप्ने मूर्तिमयीं
देवीं वरदां सोऽपि पश्यति ॥ १६० ॥
कवित्वं संस्कृते तेषां शास्त्राणां व्याकृतौ
सुतः ॥ शक्तिः प्रोन्मील्यते शास्त्रेष्वन-
धीतेषु भारती ॥ ६१ ॥ आवर्तनसह-
स्रैर्ये पठान्ति पुरुषोत्तमाः ॥ ते सिद्धाः
सिद्धिदा लोके शापानुग्रहणे क्षमाः ॥ ६२ ॥

नखरागशिरोरत्नद्विगुणीकृतरोचिषः ॥
प्रयच्छंतश्च सर्वस्वं सेवंते तान्महीश्वराः ॥ ६३ ॥ रोचनालिखितं भूर्जे
कुंकुमेन शुभे दिने ॥ धारयेद्यंत्रितं देहे
पूजयित्वा कुमारिकाम् ॥ ६४ ॥ विप्रांऽश्च
वरनारींश्च धूपैः कुसुमचंदनैः ॥ क्षीरखंडाज्यभोज्यैश्च पूजयित्वा सुभूषिताः

॥ ६५ ॥ बध्नंति ये महारक्षां बालानां
च विशेषतः ॥ भवंति नृपपूज्यास्ते
कीर्तिभाजो यशस्विनः ॥ ६६ ॥ शत्रुतो
न भयं तेषां दुर्जनेभ्यो न राजतः ॥ न च
दाराभिचारेभ्यो न दारिद्र्यं स पश्य-
ति ॥ ६७ ॥ महार्णवे महानद्यां स्थितेऽपि
च न भीः क्वचित् ॥ रणे द्यूते विवादे च

स० ३९

विजयं प्राप्नुवंति ते ॥ ६८॥ नृ गाश्च वश्य-
तां यांति नृपमान्याश्च ये नराः ॥ सर्वत्र
पूजिता लोके बहुमानपुरःसराः ॥ ६९ ॥
रतिरागविवृद्धाश्च विह्वलाः कामपीडि-
ताः ॥ यौवनाक्रांतदेहास्ताः श्रूयंते वा-
मलोचनाः ॥ १७० ॥ लिखितं मूर्ध्नि
कंठे वा धारयेद्यो रणे शुचिः ॥ शतधा

युध्यमानं तं प्रति योद्धा न पश्यति
॥ ७१ ॥ केतौ वा दुंदुभौ येषां तिष्ठते
लिखितं रणे ॥ मायासैन्यपरिग्रस्तां
कांदिशीकान् हतौजसः ॥ ७२ ॥ विचे-
तनान्विमूढांश्च शत्रुकृतपरिवर्जितान् ॥
निर्जित्य शत्रुसंघाताँल्लभते विजयं ध्रुवम्
॥ ७३ ॥ नाभिचारो न शापश्च बाणवीरा-

दिकीलनम् ॥ डाकिनी पूतना कृत्या
महामारी च शाकिनी ॥७४॥ भूताः प्रेताः
पिशाचाश्च रक्षांसि व्यंतरादयः ॥ न वसं-
ति गृहे देहे लिखितं यत्र तिष्ठति ॥ ७५ ॥
न शस्त्रानलतोयौघाद्भयं तस्योपजायते ॥
दुर्वृत्तानां च पापानां बलहानिकरं
परम् ॥ ७६ ॥ मंदुराकरिशालासु गवां

देवतानां देवता या ब्रह्माद्यैर्या च पूजिता
॥ ८३ ॥ भूयात्सा वरदा लोके साधूनां
विश्वमंगला ॥ एतामेव पुराराध्यां विद्यां
त्रिपुरभैरवीम् ॥ त्रैलोक्यमोहिनीरूपम-
कार्षीद्भगवान् हरिः ॥ १८४ ॥

इति श्रीरुद्रयामले तंत्रे नंदिकेश्वरसंवादे महाप्रभावो
भवानीनामसहस्रः स्तवराजः संपूर्णः ।

ॐ श्रीगणेशाय नमः ॥ ॐ अस्य
श्रीइंद्राक्षीस्तोत्रमंत्रस्य ॥ पुरंदरऋषिः ॥
अनुष्टुप्छंदः ॥ इंद्राक्षीदेवता ॥ ह्रीं बीज-
म् ॥ क्लीं कीलकम् ॥ सकलकामनासि-
द्ध्यर्थे पाठे विनियोगः ॥ अथ ध्यानम् ॥
इंद्राक्षीं द्विभुजां देवीं पीतवस्त्रधरां शुभा-
म् ॥ वामे हस्ते वज्रधरां दक्षिणे चाभय-

प्रदाम्॥१॥ सहस्रनेत्रां सूर्याभां नानालं-
कारभूषिताम्॥ प्रसन्नवदनां नित्यमप्स-
रोगणसेविताम् ॥२॥ श्रीदुर्गांसौम्यवद-
नां पाशांकुशधरां पराम् ॥ त्रैलोक्यमो-
हिनीं देवीं भवानीं प्रणमाम्यहम्॥ ३ ॥
इति ध्यानम् ॥ ॐ ह्रीं श्रीं इंद्राक्षीं श्रीं पें
स्वाहा ॥इंद्र उवाच॥इंद्राक्षी नाम सा देवी

दैवतैः समुदाहृता ॥ गौरी शाकंभरी देवी
दुर्गानाम्नातिविश्रुता ॥ १ ॥ कात्यायनी
महादेवी चंद्रघंटा महातपाः ॥ गायत्री सा
च सावित्री ब्रह्माणी ब्रह्मवादिनी ॥ २ ॥
नारायणी भद्रकाली रुद्राणी कृष्णपिंग-
ला ॥ अग्निज्वाला रौद्रमुखी कालरात्रि-
स्तपस्विनी ॥ ३ ॥ मेघश्यामा सहस्राक्षी

विष्णुमाया जलोदरी ॥ महोदरी मुक्त-
केशी घोररूपा महाबला ॥ ४ ॥ आनंदा
भद्रजा नंदा रोगहंत्री शिवप्रिया ॥ शिव-
दूती कराली च प्रत्यक्षा परमेश्वरी ॥ ५ ॥
इंद्राणी चंद्ररूपा च इंद्रशक्तिपरायणा ॥
महिषासुरसंहर्त्री चामुंडा गर्भदेवता ॥ ६ ॥
वाराही नारसिंही च भीमा भैरवना-

दिनी ॥ श्रुतिः स्मृतिर्धृतिर्मेधा विद्या
लक्ष्मीः सरस्वती ॥ ७ ॥ आनंदा विजया
पूर्णा मानस्तोकापराजिता ॥ भवानी
पार्वती दुर्गा हैमवत्यंबिका शिवा ॥ ८ ॥
शिवा भवानी रुद्राणी शंकरार्धशरी-
रिणी ॥ एतैर्नामपदैर्दिव्यैः स्तुता शक्रेण
धीमता ॥ ९ ॥ आयुरारोग्यमैश्वर्यं सुख-

संपत्तिकारकम् ॥ क्षयापस्मारकुष्ठादि-
तापज्वरनिवारणम् ॥ १० ॥ शतमाव-
र्तयेद्यस्तु मुच्यते व्याधिबंधनात् ॥ आव-
र्तयेत्सहस्रेण लभते वांछितं फलम्
॥ ११ ॥ राज्यवश्यमवाप्नोति सर्वमेव
न संशयः ॥ लक्षमेकं जपेद्यस्तु साक्षाद्देवी
भविष्यति ॥ १२ ॥ त्रिकालं पठते नित्यं

धनधान्यं च संपदः ॥ अर्धरात्रे पठेन्नित्यं
मुच्यते पापबंधनात् ॥ १३ ॥ इदं स्तोत्र-
मिदं पुण्यं जये तु फलमाप्नुयात् ॥ विना-
शयति रोगाणामपमृत्युं हरत्युत ॥ १४ ॥
राज्यार्थी लभते राज्यं धनार्थी विपुलं
धनम् ॥ इच्छाकामं तु कामार्थी धर्मार्थी
धर्ममक्षयम् ॥ १५ ॥ विद्यार्थी लभते

विद्यां मोक्षार्थी परमं पदम् ॥ इंद्रेण क-
थितं स्तोत्रं सत्यं सत्यं न संशयः ॥ १६ ॥
इति श्रीइन्द्राक्षीस्तोत्रं सम्पूर्णम् ॥ ॥*॥



इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मज-गंगाविष्णोः
अध्यक्ष "लक्ष्मीवेंकटेश्वर" मुद्रणागारे पं० शिवदुलारे
वाजपेयीत्यनेन स्वाम्यर्थं मुद्रयित्वा प्रकाशितम् ।
शकाब्दाः १८४३, संवत १९७८ ।

पुस्तक मिलनेका ठिकाना-गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" छापखाना, कल्याण-मुंबई.

(Tantric north Kaul)

इति

# भवानीसहस्रनाम

इन्द्राक्षीस्तोत्रं च ।

